सीदेति। "ध्रुवा" 'स्थिरा' सती 'सीद'। अतो यदनेनोपदध्यात् तद् यजमानं वाक्प्राणाभ्यां चितवान् भवतीत्यर्थः *।

प्रकारान्तरेण वाक्प्राणौ प्रशंसति— "वाग्वा अय मग्निरिति। "अग्नि र्वाग् भूत्वा मुखं प्राविशदिति श्रुतेः †। अत वाचोऽग्नित्वम् प्राणस्येन्द्रत्वं प्रागुक्तम्। इन्द्राग्निदेवत्योऽग्निश्चित्यमानक इत्यर्थः।

'यावान्' यत्परिमाणः 'अग्निः', 'यावती' यत्परिमाणा 'अस्य' अग्नेः 'मात्रा' शरीरम्, 'तावता' शरीरेण 'एनं' चित्याग्निं 'चिनोति' चितवान् भवति। "तया देवतया"-इतिमन्त्रेणोपधानेन वाक्प्राणाभ्याम् अग्नीन्द्ररूपाभ्याम् इन्द्राग्निदेवत्य मग्निं चितवानित्यर्थः। अथ नानादेवत्यानेरैन्द्राग्नत्व मित्याशङ्क्य इन्द्राग्नी सर्वदेवतात्मना प्रशंसति— "इन्द्राग्नी वै सर्वे देवा इति। "अग्निर्वै देवानां अवमो इन्द्रः परमस्तदन्तरेण अन्या देवताः, ता इन्द्राग्निभ्यां गृह्यन्ते"-इति तयोः

---

* "अन्तरिक्षस्य पृष्ठे सर्वे ज्योतिष्मान् वायुः"—इति अत्रैव प्रकरणे आम्नास्यते इहैवोपरिष्टात् ८. १. १. १।

† "अग्निर्वाग् भूत्वा मुखं प्राविशद्,
वायुः प्राणो भूत्वा नासिके प्राविशत्,
आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्,
दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्,
ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्,
चन्द्रमा मनो भूत्वा हृदयं प्राविशन्,
मृत्युरपानो भूत्वा नाभिं प्राविशद्,
आपो रेतो भूत्वा शिश्नं प्राविशन्"
—इति ऐ० आ० २. ४. २. ४।

सर्वात्मकत्वात् तद्देवत्योऽग्निश्चित्यनामापि सर्वदेवत्यः। एषः 'अग्निः' 'यावान्' 'अस्य' अग्नेः 'यावती मात्रा', तस्य तावन्तं सर्वदेवत्यमग्निं "तया देवतया"—इति मन्त्रेण उपधानेन कृतवान् भवतीति ॥ २८ ॥

अथ भूमावेवेष्टकाचयनं कर्तव्य मित्यत्र कञ्चित् मन्त्र मुपपादयति— "तदाहुः कस्मादिति। 'कस्मात्' हेतोः 'अस्यै' अस्याः भूमेरुपरि 'अग्निः चीयते' 'इति' प्रश्नः।

उत्तरम् ;— 'यत्र' यदा 'सा देवता' प्रजापतिः विस्रं 'व्यस्रंसत' विस्रस्तमासीत्, 'तत्' तत्र 'इमाम्' भूमिम् 'एव' 'रसेन' 'अनुव्यक्षरत्' सिक्तवान्। 'तम्' प्रजापतिविस्रस्तं 'यत्र' देवताः 'समस्कुर्वन्', 'तत्' तत्र अस्या मेव 'एनम्' अग्निं सम्भृतवन्तः। तस्माद् भूमावेव चयनं कर्तव्य मित्यर्थः ॥

तस्या इष्टकाया गुणं दर्शयति— "सैषैकेष्टकेति। भूमिर्दिक्चतुष्टययुक्तत्वात् इदानीन्तनैरनुष्ठातृभिरपि इष्टकाः चतुःस्रक्तयः कार्या इत्यर्थः ॥ २९ ॥

पञ्चचितिकोऽग्निरिति चयने पञ्चेष्टकाश्चेतव्या इति* प्रसिद्धिरस्ति, अत्र भूमिरूपैकेवेष्टकाभिहिता, कथं पञ्चेष्टका भव-

---

* "प्रत्यञ्चस्त उपदधाति, ०—०, सर्वोऽयमेवेयं प्रथमा चितिः। ०—०। अथ वैश्वदेवीरुपदधाति, यथा वै सा द्वितीया चितिः। ०—०। अथ तृतीयां चितिमुपदधाति। ०—०। चतुर्थीं चितिमुपदधाति। ०—०। ब्रह्म वै चतुर्थी चितिः। ०—०। पञ्चमीं चितिमुपदधाति ०—०। अथ विराज उपदधाति"—इति पञ्चैव चितयोऽष्टमे काण्डे प्रोक्ताः, एतास्तु यथावसरमुपरिष्टादिहैव व्यक्तीभविष्यन्ति। "आपो वा इदमग्रे सलिलमासीत्, स एतां प्रजापतिः प्रथमां चितिमपश्यदित्यादिश्रुतयश्चेह पर्यालोच्याः। तै० सं० ४. ७. ५. ६।

मीति, त मिमं मन्त्रोत्तराभ्यां दर्शयति— "तदाहुर्यदेव मिति। पञ्चेष्टका अपि सम्पादयति। "इय मेव प्रथमेति। तत्र यत्किञ्चिन्मृन्मयपात्रादिक मुपदध्यात् सा मृन्मयीष्टका, पुरुषाश्वादिपशुपञ्चशीर्षोपधानेन पश्विष्टका। रुक्मं हिरण्मयम्, तत्र पुरुषं स्वर्णनिर्मितं चोपदधाति; उपहिता इष्टका 'हिरण्यशकलैः प्रोक्षति'; अतोऽस्य 'हिरण्यसंस्पर्शादियं हिरण्येष्टकेत्युच्यते। स्रुगाद्युपधानेन वानस्पत्येष्टका; वनस्पतिविकारत्वात् स्रुगादीनाम्। पुष्करपर्णाद्युपधान मन्नेष्टका; तत्र दधिघृतादीना मन्नत्वात्। इति 'पञ्चेष्टकाः' वेदितव्याः। तत्र मार्त्तिक्य इष्टका एका एव पश्वादिसम्बन्धा भवन्तीति तात्पर्यम् ॥ २० ॥

चितायां मिष्टकायां प्राङ्गणीयाग्निरेव शिर इति सिद्धान्तयितुं पूर्वपक्षं सोपपत्तिक माह— "तदाहुः कतरत इति। 'इष्टकायाः' 'कतरतः' कस्मिन् प्रदेशे 'शिरः' तिष्ठतीति प्रश्नः। उत्तरम्;— 'यतः' यस्मिन् प्रदेशे इष्टकायाः 'उपसृज्य' 'यजुः' वदेत्, तदेव शिरः इति केषाञ्चिन्मतम्। उपसर्जनप्रदेशं च स स्वय मेवाह— "स स्वय मिति। 'स्वयमातृण्णायाः' पश्चिमच्छिद्रयुक्तायाः शिलायाः 'अर्वाक्' समीपात् प्रदेशे 'उपसृज्य' 'यजुः' मन्त्रं 'वदेत्'। "तथो हास्येति। तथा सति शिर इष्टकाः 'स्वयमातृण्णाम्' 'अभि'-लक्ष्य 'आहृता भवन्ति' 'इति'।

तद् दूषयति— "न तथा कुर्यादिति। इष्टका इति यत् एतानि 'अस्य' अग्नेः 'अङ्गानि' 'परूंषि' पर्वाणि; तथा सति प्रतीष्टकां यजुरुपसर्जनेन शिरःकरणे प्रतिपर्वं शिरः जातवान् भवति, तच्चानिष्टम्, अतः स्वाभिमतं शिरो दर्शयति— "यो

चायेति। चित्यप्रदेशे 'अग्निः' आहवनीयो निहितो भवति, 'तस्यैव' 'एतासाम्' इष्टकानां 'शिरः' इति उच्यते ॥ ११ ॥

चयने पशुशीर्षोपधानात् पशिष्टकेत्युक्तम्, तत्र पशूनां सङ्ख्याप्रतिवचनव्याजेन इष्टकानां लोकद्वयात्मकताम्, अग्नेः सर्वलोकात्मकताञ्चाह— "तदाहुः कति पशवोऽग्ना उपधीयन्त इतीति। कति पशवोऽग्नावुपधेयाः? इति पृष्टे, 'पञ्च' 'इति' प्रतिवदेत्। पुरुषोऽश्वो गौरविरज इति पञ्च पशवः। तदादिभिश्चित्यन्ते तासा मुपधीयमानोऽग्निः सर्वलोकात्मकः प्रजापतिरिति ॥ १२ ॥

पूर्वं पशिष्टकापादनं पञ्च मिति मत्वा पञ्चेति प्रतिवचनं दत्तम्, इदानीन्तु मृत्तिकोदकसम्पादनीयानामिष्टकानां पशुरूपत्वं प्रश्नोत्तराभ्यां दर्शयति— "अथो एक इति। पूर्वं पञ्च पशव इत्युक्तम्, इदानीं अविनामक एको वा पशुर्भवतीति प्रतिब्रूयात्। अविशब्दार्थं माह— "इय मिति। भूमिरेव सर्वप्रजापोषकत्वादविरित्युच्यते। अवतेरविशब्दनिष्पत्तिः। भूमिरेवेष्टकारूपा अग्निचित्यनामा; 'हि' यतः 'अस्यै' अस्यां भूमौ 'सर्वोऽग्निश्चीयते', 'तस्माद्' भूमेरेकत्वाद् 'एकः' अविनामा पशुरेवेत्यर्थः ॥ १३ ॥

यथा मृत्तिका इष्टकासाधनम्, एव मापोऽपि; तासां पशुत्व माह— "अथो द्वाविति ब्रूयादिति। 'द्वौ' अविनामानौ पशू 'इति' 'ब्रूयात्'। अविशब्दार्थं निरूपयति— "इयञ्चासौ चेति। 'इयं' भूमिरेकोऽविः, 'असौ' द्युलोकोऽपरोऽविः; सस्यवृष्टिभ्यां भूमिद्युलोकयोः सर्वपोषकत्वात् अवित्वम्। मृत्तिका इयं भूमिः, आपोऽसौ द्युलोकः; ततः सम्भवात् मृत्त-

सम्पाद्या इष्टकाः, पशो द्यावी इति प्रति वदेत्। पत्र मृन्मयोरविशब्दवाच्यत्वात् तयोर्लोकद्वयात्मकत्वं सिद्ध मित्यर्थः॥ १४॥

पशुत्वप्रतिवचनेन लोकद्वयात्मकेष्टकाचितस्याग्नेः सर्वलोकात्मकत्व माह— "अथो गौरिति प्रतिब्रूयादिति। "इमे वै लोका गौरिति। 'यद्धि किंच'-इत्यादिना गोत्वोपपादनम्। सर्वैर्गम्यमानेन लोका गौः। कर्मार्थे गमेर्डोंप्रत्ययः। यतः चीयमानो ऽग्निः सर्वलोकात्मकः, स चैकः, तस्माद् गौरेकः पशुरिति प्रतिवदेत्॥ १५॥

अग्निचयनस्य प्रजापतिभवन मेव न प्रयोजन मिति विवक्षुः पूर्वं प्रयोजनं पृच्छति— "तदाहुरिति। 'कस्मै' 'कामाय' प्रयोजनाय 'अग्निः' 'चीयते' इति फलप्रश्नः। तत्र फलान्तरं पूर्वपक्षयति— "सुपर्ण इति। चीयमानोऽग्निः 'सुपर्णः' पक्षी भूत्वा। अग्नेः पक्षिरूपत्वं ब्राह्मणे समाम्नातम् *। 'मा' मां चितवन्तं यजमानं 'दिवं' स्वर्गं 'वहात्' प्रापयेत् 'इति' मैवाभिमतं तन्निराकरोति— "न तथेति। 'एतद्रूपं' पक्षिरूपं 'कृत्वा' 'सप्त प्राणाः' प्रजापत्यात्मना सम्पन्नाः। 'प्रजापतिः' अपि तद्रूपधारी 'देवान्' असृजत्। तेऽपि तदात्मना 'अमृतत्वम्' आद्दन्त। तस्मात् प्राणसम्पादितप्रजापतिभवन मेव चयनस्य फल मित्यर्थः॥ १६॥ २॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम्॥

---

* पत्रिमेव द्वितीयब्राह्मणे प्रथमकण्डिकायां द्रष्टव्यम् (३५ पृ० ८ पं०)।

( अथ तृतीयं ब्राह्मणम् । )

प्रजापतिर्वा ऽइदमग्र ऽआसीत् * । एक एव सो ऽकामयत स्यां प्रजायेयेति सो ऽश्राम्यत्स तपो ऽतप्यत तस्माच्छ्रान्तात्तेपानादापो ऽसृज्यन्त तस्मात् पुरुषात्तप्तादापो जायन्ते ॥ १ ॥

आपो ऽब्रुवन् † । क्व वयं भवामेति तप्यध्व मित्यब्रवीत्ता अतप्यन्त ताः फेन मसृजन्त तस्मा-दपां तप्तानां फेनो जायते ॥ २ ॥

फेनो ऽब्रवीत् ‡ । क्वाहं भवानीति तप्यस्वेत्य-ब्रवीत् सो ऽतप्यत स मृद मसृजतैतद्वै फेन-स्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥ ३ ॥

मृदब्रवीत् § । क्वाहं भवानीति तप्यस्वेत्यब्रवीत् सातप्यत सा सिकता असृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विक-

---

* 'ऽआसीदेक'—इति क ।

† 'ऽब्रुवन्'—इति ग । 'ऽब्रुवन्'—इति घ ।

‡, § 'ऽब्रवीत'—इति ग । 'ऽब्रवीत्'—इति घ ।

घ्नन्ति सैकतमिवैव भवत्येतावन्नु तद्यत् क्वाहं भवानि क्वाहं भवानीति ॥ ४ ॥

सिकताभ्यः शर्करामसृजत । तस्मात् सिकताः शर्करैवान्ततो भवति शर्कराया अश्मानं तस्माच्छर्कराश्मैवान्ततो भवत्यश्मनो ऽयस्तस्मादश्मनो ऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातं हिरण्यसङ्काशमिवैव भवति ॥ ५ ॥

तद्यदसृज्यताक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वो ऽक्षरत्तस्मादष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥

अभूद्वा ऽइयं प्रतिष्ठेति । तद् भूमिरभवत्ताम् अप्रथयत् सा पृथिव्यभवत् तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संव्वत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥ ७ ॥

तद्यानि तानि भूतानि ऋतवस्ते ऽथ यः स भूतानां पतिः संव्वत्सरः सो ऽथ या सोषाः पत्न्यौषसी सा तानीमानि भूतानि च भूतानां च पतिः संव्वत्सर ऽउषसि रेतो ऽसिञ्चन्त्स संव्वत्सरे कुमारो ऽजायत सो ऽरोदीत् ॥ ८ ॥

तं प्रजापतिरब्रवीत् । कुमार किं रोदिषि

यच्छ्रमात्तपसो ऽधि जातो ऽसीति सो ऽब्रवीदन-पहतपाप्मा वा ऽअस्म्यहितनामा नाम मे धेहीति तस्मात् पुत्रस्य जातस्य नाम कुर्यात् पाप्मान मेवास्य तदपहन्त्यपि द्वितीय मपि तृतीय मभिपूर्व्व मेवास्य तत् पाप्मान मपघ्नन्ति ॥ ९ ॥

त मब्रवीद्रुद्रो ऽसीति। तद्यदस्य तन्ना-माकरोदग्निस्तद्रूप मभवदग्निर्वै रुद्रो यदरोदीत् तस्माद्रुद्रः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १० ॥

त मब्रवीत् सर्व्वो* ऽसीति। तद्यदस्य तन्नामा-करोदापस्तद्रूप मभवन्नापो वै सर्व्वो† ऽद्भ्यो हीदꣳ सर्व्वं जायते सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ ११ ॥

त मब्रवीत् पशुपतिरसीति। तद्यदस्य तन्नामा-करोदोषधयस्तद्रूप मभवन्नोषधयो वै पशुपति-स्तस्माद्यदा पशव ओषधीर्लभन्ते ऽथ पतीयन्ति सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १२ ॥

---

*, † शर्वो—इति च का०-वैभरदत्पाठः।

त मब्रवीदुग्रो ऽसीति । तद्यदस्य तन्नामाकरो-द्वायुस्तद्रूप मभवद्वायुर्व्वा ऽउग्रस्तस्माद्यदा बलवद्वात्युग्रो व्वातीत्याहुः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १३ ॥

त मब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरो-द्विद्युत्तद्रूप मभवद्विद्युद्वा ऽअशनिस्तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १४ ॥

त मब्रवीद्भवो ऽसीति । तद्यदस्य तन्नामा-करोत् पर्ज्जन्यस्तद्रूप मभवत् पर्ज्जन्यो वै भवः पर्ज्जन्याद्धीदᳪ सर्व्वं भवति सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १५ ॥

त मब्रवीन्महान्देवो ऽसीति । तद्यदस्य तन्नामा-करोच्चन्द्रमास्तद्रूप मभवत् प्रजापतिर्व्वै चन्द्रमाः प्रजापतिर्व्वै महान् देवः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १६ ॥

त मब्रवीदीशानो ऽसीति । तद्यदस्य तन्नामा-करोदादित्यस्तद्रूप मभवदादित्यो वा ऽईशान ऽआदित्यो ह्यस्य सर्व्वस्येष्टे सो ऽब्रवीदेतावान्वा

ऽस्मि मा मेतः परो नाम धा इति ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः
सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मा-
दाहुर्गायत्रो ऽग्निरिति सोऽयं कुमारो रूपाण्यनु-
प्राविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्ये-
वास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनु-
प्राविशत् ॥ १९ ॥

तमेतꣳ संव्वत्सरऽएव चिनुयात् । संव्वत्सरे
ऽनुब्रूयाद्द्वयोरित्यु हैक ऽआहुः संव्वत्सरे वै तद्रेतो
ऽसिच्यत संव्वत्सरे कुमारो ऽजायत तस्माद्द्वयो-
रेव चिनुयाद्द्वयोरनुब्रूयादिति संव्वत्सरे त्वेव
चिनुयात् संव्वत्सरे ऽनुब्रूयाद्यदाव रेतः सिक्तं
तदेव जायते तत्ततो विक्रियमाणमेव वर्धमानꣳ
शेते तस्मात् संव्वत्सरऽएव चिनुयात् संव्वत्सरे
ऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवास्य
तदपहन्ति चित्रनामानं करोति चित्रो ऽसीति
सर्व्वाणि हि चित्राण्यग्निः ॥ २० ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१. ३.] ॥

त मब्रवीदुग्रो ऽसीति । तद्यदस्य तन्नामाकरोद्वायुस्तद्रूप मभवद्वायुर्व्वा ऽउग्रस्तस्माद्यदा बलवद्वात्युग्रो व्वातीत्याहुः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १३ ॥

त मब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरोद्विद्युत्तद्रूप मभवद्विद्युद्वा ऽअशनिस्तस्माद्यं व्विद्युद्धन्त्यशनिरवधीदित्याहुः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १४ ॥

त मब्रवीद्भवो ऽसीति । तद्यदस्य तन्नामाकरोत् पर्ज्जन्यस्तद्रूप मभवत् पर्ज्जन्यो वै भवः पर्ज्जन्याद्धीद सर्व्वं भवति सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १५ ॥

त मब्रवीन्महान्देवो ऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूप मभवत् प्रजापतिर्व्वै चन्द्रमाः प्रजापतिर्व्वै महान् देवः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे नामेति ॥ १६ ॥

त मब्रवीदीशानो ऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूप मभवदादित्यो वा ऽईशान आदित्यो ह्यस्य सर्व्वस्येष्टे सो ऽब्रवीदेतावान्वा

ऽस्मिन्मा मेतः परो नाम धा इति ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मा-दाहुर्गायत्रो ऽग्निरिति सोऽयं कुमारो रूपाण्यनु-प्राविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्ये-वास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनु-प्राविशत् ॥ १९ ॥

त मेतꣳ संव्वत्सर ऽएव चिनुयात् । संव्वत्सरे ऽनुब्रूयाद्वयोरित्यु हैक ऽआहुः संव्वत्सरे वै तद्रेतो ऽसिञ्चन्त्स संव्वत्सरे कुमारो ऽजायत तस्माद्वयो-रेव चिनुयाद्वयोरनुब्रूयादिति संव्वत्सरे त्वेव चिनुयात् संव्वत्सरे ऽनुब्रूयाद्यद्वाव रेतः सिक्तं तदेव जायते तत्ततो व्विक्रियमाण मेव व्वर्धमानꣳ शेते तस्मात् संव्वत्सर ऽएव चिनुयात् संव्वत्सरे ऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मान मेवास्य तदपहन्ति चित्रनामानं करोति चित्रो ऽसीति सर्व्वाणि हि चित्राण्यग्निः ॥ २० ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१. ३.] ॥

तृतीयब्राह्मणे अपादीन्यष्टौ रूपाणि चयनोपयुक्तानि उच्यन्ते । ततः कुमारोत्पत्तिः । तस्याष्टौ नामानि, अष्टौ रूपाणि × × × "प्रजापतिरग्निरूपाण्यभ्यध्यायत्"—इति * वक्ष्यमाणमन्त्र-विधानोपयोगीनि मन्तव्यम् । अथवा पुरुषादिपञ्चपशूनुपालभ्य संवत्सरपर्यन्त मुख्याग्निं धारयित्वा चयनाय दीक्षत इति वक्ष्यते †, तदर्थ मितिहासाख्यान मिति ।

"प्रजापतिर्वा इद मिति । पुरुषात् उदकसृष्टिं लोकप्रसिद्धामाह— "तस्मात् पुरुषात् तस्मादापो जायन्त इति ॥ १ ॥

"आपोऽब्रुवन्निति । प्रजापतिना सृष्टाः 'आपः' 'क्व' प्रदेशे 'वयं' 'भवाम' तिष्ठाम 'इति' प्रजापतिम् 'अब्रुवन्' । ततस्तेन तपनं कुरुतेत्युक्ता 'अतप्यन्त' । ततः 'फेनं' सृष्टवन्तः ॥ २ ॥

"फेनोऽब्रवीदिति । तस्मात् फेनात् मृदुत्पत्तिः समुपपादयति— "एतद्वै फेन इति । उदकमध्ये वायुवशेन परिभ्रमणं प्लवन मेव फेनस्य तपःकरणम् । 'स यदा उपहन्यते', संहता भवति, तदा मृत्तिकैव भवति ॥ ३ ॥

"मृदब्रवीदिति । मृत्तिकायाः सिकताः । 'विकृषन्ति' भूमि-कर्षण मेव मृदस्तप इत्यर्थः । 'यद्यपि सुसारस्यं विकृषन्ति' यथा मृत्तिका चूर्णीकृता भवति, तथा विकर्षणेन सा मृत् सिकता भवति ॥ ४ ॥

एतावत्पर्यन्तं "क्वाहं भवति"—इति प्रजापतिं प्रति उदक-फेनमृद्भिः वचनम्, इत उत्तरं नास्ति; अत एव पूर्वत्र त्रये "ताः फेन मसृजन्त"—"स मृद मसृजत"—"सा सिकता असृ-

* इतः परतने एव ब्राह्मणे (४ ब्रा० १ का०) द्रष्टव्यम् ।

† एतदपीतः परतने एव ब्राह्मणे द्रष्टव्यम् ।

जत"–इति अबादीनां स्रष्टृत्व मुक्तम्, इत उत्तरं तदभावात् "सिकताभ्यः शर्करा मसृजतेत्यादौ प्रजापतेः स्रष्टृत्व मुच्यते ।

"तस्मात् सिकता इति । 'अन्ततः' अन्ते 'सिकताः शर्करा भवन्ति' । 'अश्मा' पाषाणोऽपि अन्ततः शर्करा भवन्ति । 'तस्मात्' अश्मनः पाषाणात् 'अयः' उत्पादितवान् । अश्मनोऽयःकारणत्व मुपपादयति— "अश्मनो यो धमन्तीति । अयसो हिरण्यत्वं प्रतिपादयति— "बहुधा तं हिरण्यसङ्काश मिति ॥ ५ ॥

भूमेर्गायत्रीत्व मुपपादयितु माह— "तद्यदसृज्यताक्षर-दिति । एव मबादिक मुत्तरोत्तरक्रमेण सृष्टा अक्षरत् । तस्मात् क्षरणात् 'अक्षरम्' । 'अक्षरत्'–इति लङडागमे रूपम् । अडा-डागमसाश्लिष्टेन अक्षरं सम्पन्नम् । यस्मात् प्रजापतिः अष्टौ कृत्वा-क्षरत्, तैवं संज्ञासाम्यात् अष्टाक्षरा गायत्री सम्पन्ना ॥ ६ ॥

"अभूद्वा इयं प्रतिष्ठेतीति । 'इयम्' एव आद्यसृष्टिः सर्वेषां 'प्रतिष्ठा' 'अभूत्' 'इति' भूम्यात्मना सम्पन्ना, तस्या बहुधा प्रथनात् पृथिवीत्वम् ।

अथ कुमारोत्पत्तिं दर्शयितु माह— "तस्यां अस्यां प्रति-ष्ठाया मिति । 'तस्यां' पृथिव्यां 'भूतानि भूतपतिः च' 'संवत्सराय' 'संवत्सरसाध्याय कर्मणे 'अदीक्षन्त' दीक्षां कृतवन्तः । दीक्षा-कारणं यजमानपत्न्योः विहित मिति तौ दर्शयति— "भूता-नाम्पतिर्गृहपतिरिति । तत्र भूतपतिः 'गृहपतिः' यजमानः 'आसीत्' । 'उषाः' उषोदेवता 'पत्नी' × × × ॥ ७ ॥

शब्दाना मर्थं माह— "तद् यानि तानि भूतान्यृतव इति । 'यानि भूतानि' इत्युच्यन्ते, तानि ऋतवोऽपि, ऋतुपतिः संवत्सरः । "सोषाः पत्नी"–इत्युक्तम् । 'सा', संवत्सरस्य यज-

मानदपत्वात् 'चोषसी' उषसो धर्ता देव एव खलु भूयो-ऽवयवैः सहितः उषोनामपदोयुक्तः। संवत्सरो यजमानः स्वपत्न्यां सुषसि रेतः सिक्तवान्, तत् सिक्तं रेतः संवत्सरान्ते कुमारात्मना जातम्। यद्वा संवत्सर इति असमस्तं पदम्। संवत्सरपर्यन्तं रेतः सिक्तवान्, रेतःसेकः सोऽसौ वत्सरः, कुमारो-त्पत्तिरेकः, इति वर्षद्वयं जातम्। एतदेवाभिप्रेत्य द्वयोरिति च हैक आहुः। "संवत्सरो वैतद् रेतोऽसिञ्चत् संवत्सरे कुमारोऽजायत"-इति वक्ष्यते।

उत्पन्नस्य कुमारस्य अष्टौ रूपाणि दर्शयितुमाह— "सोऽरोदीत्, तं प्रजापतिरब्रवीदित्यादिना। हे 'कुमार' 'श्रमात् जातः' त्वं किमर्थं 'रोदिषि ?-'इति' प्रजापतिनोक्ते, स आह— 'अहितनामा' अकृतनामधेयः, अत एव 'अनपहतपाप्मा' 'अस्मि', अतः पापविमोचनाय 'मे' मम नामधेयं कुरु इति।

प्रसङ्गात् किञ्चिद् धर्मं दर्शयति— "तस्मात् पुत्रस्येति। 'जातस्य पुत्रस्य' नक्षत्रनाम अश्वयुजः स्वातिः हस्तः इत्यादि 'नाम' नामकरणं 'कुर्यात्', तेन तस्य 'पाप्मानमेव' 'अपहन्ति' अपहतवान् भवति। पुनः 'द्वितीयं' व्यावहारिकं माता पुत्रादि-नाम करोति। 'तृतीयम्' आहिताग्निरिति। एवं नामकरणेन 'अस्य' पुत्रस्य 'पाप्मानम्' अपहतं कृतवान् भवति॥ ८, ९॥

एवं नामधेयाय प्रार्थितवतः कुमारस्य रुद्र-सर्वादीन्यष्टौ नामानि प्रदर्शयिष्यन्ते *। अग्नेः रुद्रात्मकत्वात् तदुचिता

---

* "अग्निꣳ हृदयेन, अशनिꣳ हृदयाग्रेण, पशुपतिं कृत्स्न-हृदयेन, भवं यक्ना। शर्वं मतस्नाभ्याम्, ईशानं मन्युना, महा-देवमन्तःपर्शव्येन, उग्रं देवं वनिष्ठुना"—इति मा० सं० ३९, ८।

अष्टौ मूर्त्तयो वक्तव्याः। रुद्रस्य हि पृथिव्यप्तेजोवाय्वाकाश-सूर्यचन्द्रयजमानाख्या अष्टौ मूर्त्तयः सन्ति, भवादिनामानि च। ता एव अग्नेः एष्वपि निरूपयिष्यन्ते।

तत्र प्रथमं नाम निर्दिशति— "स अब्रवीद्रुद्रोऽसीति *। अग्निरेव रुद्रो नामभागभवदित्यर्थः। यद्वा 'अग्निस्तद्रूप मभवत्' रुद्रनामव्यपदेश्योऽग्निरित्यर्थः †।

अग्ने रुद्रत्व मुपपादयति— "यदरोदीदिति। अनेन तेजोमूर्त्तिरुक्तेति मन्तव्यम्। 'रुद्रः' रुद्रनामा 'सः' कुमारः प्रजापतिम् 'अब्रवीत्',— 'अतः' रुद्रनाम्नः ज्यायान् महत्तरोऽस्मि, तस्मात्तन्नाम नास्तु मित्यर्थः; अतो 'मे नाम' अन्यद् 'धेहि' कुर्वेवेति ॥ १० ॥

"स अब्रवीत् सर्वोऽसीतीति ‡। तस्य सर्व इति द्वितीयं नाम, तस्य अपो रूपम्। अपां सर्वत्व मुपपादयति— "आपो वै सर्व इति। 'वै'-शब्दद्योतितां श्रुति माह— "अद्भ्यो हीद मिति। अद्भ्यः सर्वं जगदुत्पद्यते। आपो वा इदं सर्वं विश्वा भूतानि "आपो वा इदमग्रे सलिल मासीत्" -इति §। अतो जलात्मत्वं च "सलिलं सर्व मा इदम्"-इत्यत्र ‖ श्रुतम्। "ज्यायान् वा अतोऽस्मि धेह्येव मे नामेतीति। तस्य प्रतिनामकरणं नाम्नातम्; एकस्य पुरुषस्य एक-

---

* "रुद्रः"—इत्यादि अथ० सं० १५. ५. ११, १० ।
† "रुद्रो वा एषः यदग्निः"—इति तै० ब्रा० २. १. २. १ ।
‡ 'शर्वः'—इत्यादि अथ० सं० १५. ५. ५, ४ ।
§ तै० सं० ५. ६. ४; ७. ५; ७. १. ५; तै० ब्रा० १. १. ३. ५ ।
‖ ऋ० सं० १०. १२९. ३ । तै० ब्रा० ५. २. ५, ६ ।

तत्त्वं सम्भव मित्यर्थः । "सोऽयं कुमारो रूपाणीति । 'कुमारः' अग्निः स्वनामभिः रुद्रसर्वादिभिरष्टभिः प्रतिपाद्यानि, मन्यु-दक्षौषध्यादीनि अष्टौ रूपाणि अनुप्रविष्टवान् । स कुमारोऽग्निः तत्तद्रूपेभ्यः पृथग्भूतो न दृश्यत इति तात्पर्यम् ॥ १९ ॥

अथ संवत्सरपर्यन्त मुख्याग्निधारणं कर्त्तव्य मिति दर्शयितु माह— "स नैतद् संवत्सर एव चिनुयादित्यादि । 'संवत्सर एव' संवत्सरपर्यन्तं स्थित्वेत्यर्थः । प्रसङ्गात् कञ्चिदर्थं दर्शयति— "संवत्सरेऽनुब्रूयादिति । वर्षपर्यन्तं गुरुसन्निधौ स्थित्वा अधीयत इति । "संवत्सरवासिने प्रब्रूयात्"—इत्यैतरेयकम् * । तत्र पक्षान्तरं दर्शयति— "द्वयोरित्वु हैक आहुरिति । केचित् संवत्सर-पर्यन्तं मुख्य मग्निं धारयित्वा, ततः संवत्सरे चयनं कर्त्तव्य मित्याहुः †, अनुवचनञ्च तथा करणीय मिति वदन्ति । तत्रो-पपत्तिं दर्शयति— "संवत्सरे वैतद्रेत इति । पूर्वं-'संवत्सरे' 'रेतोऽसिञ्चन्', 'स संवत्सरे कुमारोऽजायत' इति रेतस्से-कस्यैको वत्सरः, कुमारोत्पत्तावेक इति वर्षद्वयस्य समाम्नातत्वादिति । प्रथमं पक्षं सहेतुकं सिद्धान्तयति— "संवत्सरे त्वेव चिनुयादिति । 'तु'-शब्दो वर्षद्वयपक्षनिवृत्त्यर्थः । रेतस्से-कानन्तर मेव कललबुद्बुदपिण्डादिक्रमेण वर्षात् प्रागेव कुमारोत्पत्तेरित्यर्थः ‡ ।

---

* "नानन्तेवासिने प्रब्रूयात्, नासंवत्सरवासिने, नो एवासंवत्सरवासिने, नाब्रह्मचारिणे, नाब्रह्मचारिणे, नो एवाब्रह्मचारिणे, नानभिप्रायाय"—इत्यादि ऐ० आ० ५. ३. ३ अ० ४ ।

† एतदेव पुरस्तादुक्तं भाष्ये 'वक्ष्यते'—इति (४४ पृ० ५ पं०) ।

‡ "शुक्रशोणितसंयोगात्प्राक्पिण्डसंयोगाच्च सत् कथ मिदं शरीरं

"तस्य चित्तस्य नामेति। चयनसम्बन्धाच्चित्नाम सम्पन्न मिति तात्पर्यम्। चित्रत्व मग्नेरुपपादयति— "सर्वाणि हि चित्राण्यग्निरिति। धूम्रोदकौषध्यादीनां रूपाणा मग्न्यात्मकत्वात् तस्य चित्रत्व मिति। किञ्च यद्यत् चित्रवर्णं तत्तत् सर्व मग्निरेव; शुक्लभास्वररूपत्वात् तस्येति ॥ २० ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रा कल्पवाजिद्विपसहितरथौ सायणः सिङ्गणार्यौ ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

पदं संयम्यते• सौम्यो भवति, एकरात्रोषितं कललं भवति, पञ्चरात्राद् बुद्बुदः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्बुदः, पञ्चविंशतिरात्रः स्वस्थितो घनो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशो, मासचतुष्केण त्वग्व्यादेशः, पञ्चमे मासे नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्वाङ्गसम्पूर्णो भवति, •—•, दशमे मासे प्रजायते"—इत्यादि निरु० १४. ६।

ऽइति तान्नाना देवताभ्य आलिप्सत वैश्वकर्मणं पुरुषं वारुणमश्व मैन्द्र मृषभं त्वाष्ट्र मवि माग्नेय मजम् * ॥ ५ ॥

स ऐक्षत । नाना वा ऽइदं देवताभ्य आलिप्सेऽग्नेर्वा इमानि रूपाणि कामये हन्तैनानग्निभ्यः कामायालभा ऽइति तानग्निभ्यः कामायालभत तद्यदग्निभ्य इति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत् कामायेति कामेन ह्यालभत तानाप्रीतान् पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत् ॥ ६ ॥

स ऐक्षत । या वै शीर्ष्वध्यासिष मिमास्ताः शीर्षस्तु हन्त शीर्षाण्येवोपदधा इति स शीर्षाण्येवोत्कृत्योपादधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावयत्तेन यज्ञं समस्थापयन्नेन्मे यज्ञो विकृष्टो ऽसदित्यात्मा वै यज्ञो नेन्मेऽयमात्मा विकृष्टो ऽसदित्येतेन पशुनेष्ट्वा तत् प्रजापतिरपश्यद् यथैतस्याग्नेरन्तं न पर्य्यैत् † ॥ ७ ॥

* 'माग्नेयमजम्'—इति क। 'माग्नेयमणुम्'—इति ग, घ।

† 'पर्य्यैत्'—इति ग।

स ऐक्षत। य मिम मात्मान मप्सु प्रापिप्लवं त मन्विच्छानीति त मन्वैच्छत्तदयदेषा मप्सु प्रविष्टानां प्रत्यतिष्ठत्ता आपः सममरदथ यदस्यां तां मृदं तदुभयए सम्भृत्य मृदं चापश्चेष्टका मकरोत्तस्मादेतदुभय मिष्टका भवति मृच्चापश्च ॥ ८ ॥

स ऐक्षत। यदि वा ऽइद मित्थ मेव सदात्मान मभिसंस्करिष्ये मर्त्यः कुणपोऽनपहतपाप्मा भविष्यामि हन्तैतदग्निना पचानीति तदग्निनापचत्तदेनदमृत मकरोदेतद्वै हविरमृतं भवति* यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृता एवैनास्तत् कुर्व्वन्ति ॥ ९ ॥

तद्यदिष्ट्वा पशूनापश्यत्। तस्मादिष्टकास्तस्मादिष्ट्वैव पशूनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्व्वन्त्यथो ह तदन्यदेव† ॥ १० ॥

तद्यास्ताः श्रियः। एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितय-

* 'भवति'—इति ग, घ।
† 'तदन्यदेव'—इति ग।

स्याद्यत् पशुशीर्षाण्युपधाय चितौ यिनोत्येतैरेव त-च्छीर्षभिरेतानि कुसिम्भानि सन्दधाति ॥ ११ ॥

त ऽएते सर्व्वे पशवो यदग्निः* । तस्मादग्नौ पशवो रमन्ते पशुभिरेव तत् पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयते ऽग्निर्ह्येष यत् पशवस्ततो वै प्रजापतिरग्निर-भवत् ॥ १२ ॥

तद्धैक ऽआहुः । अथैवैतैः सर्व्वैः पशुभि-र्यजेत यद्वा ऽएतैरत्र सर्व्वैः प्रजापतिरयक्ष्यत तदेवाग्नेरन्तं पर्य्यैष्यत्तद्यदेतैरेव सर्व्वैर्यजेत तदे-वाग्नेरन्तं परीयादिति न तथा कुर्याद् देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भ-रेदेतानि वा ऽएतत् कुसिम्भान्येताश्चितीः सम्भरति तस्मात्तथा न कुर्यात् ॥ १३ ॥

यदेवैतान् पशूनालभते । आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमते ऽन्नं वा ऽआ-यतनं तदेतत् पुरस्तान्निदधाति तदेनं पश्यन्नग्नि-रुपावर्त्तते ॥ १४ ॥

---

* 'यदग्निः'—इति ग ।

पुरुषोऽश्वो गौरविरजो भवन्ति। एतावन्तो वै सर्व्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत् पुरस्तान्निदधाति तदेनं पश्यन्नभिऽपावर्त्तते ॥ १५ ॥

पञ्च भवन्ति। पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य एतत् पञ्चायतनानि निदधाति तदेनं पश्यन्नभिऽपावर्त्तते ॥ १६ ॥

तद्यदग्निभ्य इति*। बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत् कामायेति यथा तं काम माप्नुयाद्यजमानो यत् काम एतत् कर्म्म कुरुते ॥ १७ ॥

पुरुषं प्रथम मालभते। पुरुषो हि प्रथमः पशूना मथाश्वं पुरुषऽ ह्यन्वश्वो† ऽथ गा मश्वऽ ह्यनु गौरथाविं गाऽ ह्यन्वविरथाज‡ मविऽ ह्यन्वजस्तदेनान्यथापूर्व्वं यथाश्रेष्ठ मालभते ॥ १८ ॥

तेषां विषमा रशनाः स्युः। पुरुषस्य वर्षिष्ठाथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाऽ रशनाः करोत्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः

* 'इति'—इति क।

† 'ह्यन्वश्वो'—इति क।

‡ 'ह्यन्वविरथाज'—इति ख।

सर्व्वाः सदृश्यः सर्व्वे ह्येते समाः सर्व्वे सदृशा* अनयो ह्युच्यन्ते † ऽन्नं ह्युच्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥

तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेष्वेवाप्यत इयं प्रथमा मृन्मयीष्टकाथ यत्पशुमालभते तेन पश्विष्टकाप्यतेऽथ यदश्वा अभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाप्यतेऽथ यदिध्मो यूपः परिधयस्तेन व्वानस्पत्येष्टकाप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनान्नं पञ्चमीष्टकाप्यत एवमु हास्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवति ॥ २० ॥

तेषां चतुर्व्विंशतिः सामिधेन्यः । चतुर्व्विंशत्यर्द्धमासो वै संव्वत्सरः संव्वत्सरो ऽग्निः‡ यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ २१ ॥

---

* 'सदृशाः'—इति क, ख, च ।

† ह्युच्यन्ते'—इति क ।

‡ 'संव्वत्सरोऽग्नि-'—इति ग ।

यद्वेव चतुर्व्विꣳशतिः * । चतुर्व्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्धे ॥ २२ ॥

यद्वेव चतुर्व्विꣳशतिः । चतुर्व्विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्य्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्धे ॥ २३ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप् प्राण मेवास्य गायत्रीभिः समिन्ध आत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्यय मात्माभितः प्राणा भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरुपरिष्टाद्भूयाꣳसो हीमे पुरस्तात् प्राणाः कनीयाꣳस उपरिष्टात् ॥ २४ ॥

सोऽन्वाह । समास्त्वाग्न ऋतवो वर्द्धयन्त्विति प्रजापतिं विस्रस्तं यत्राग्निः समदधात्त मब्रवीद्या मत्सम्भिताः सामिधेन्यस्ताभिर्मा समिन्धस्वेति ॥ २५ ॥

---

* 'चतुर्व्विꣳशतिः'—इति क, ग, घ, ङ ।

स एता अपश्यत् । समास्त्वाग्न ऽऋतवो व्वर्द्धयन्त्विति समास्त्वाग्न ऽऋतवश्च व्वर्द्धयन्त्वित्येतत् संव्वत्सरा ऋषयो यानि सत्येति संव्वत्सराश्च त्वऽर्षयश्च सत्यानि च व्वर्द्धयन्त्वित्येतत् सं दिव्येन दीदिहि रोचनेनेत्यसौ वा ऽआदित्यो दिव्यꣳ रोचनं तेन सन्दीदिहीत्येतद्विश्वा ऽआभाहि प्रदिशश्चतस्र इति सर्वा ऽआभाहि प्रदिशश्चतस्र इत्येतत् * ॥ २६ ॥

ता एता एकव्याख्यानाः । एत मेवाभि यथित मेव संस्कुर्यादेतꣳ सन्दध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिꣳ समैन्ध तेन प्राजापत्याः † ॥ २७ ॥

द्वादशाप्रियः । द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावते वैन मेतदाप्रीणाति ॥ २८ ॥

यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै

---

* 'इत्येतत्'—इति ग । 'इत्येतत्'—इति घ ।

† 'प्राजापत्याः'—इति ग , 'प्राजापत्याः'—इति घ ।

जगत्यष्टा हीदꣳ सर्व्वं जगदियमु वा ऽअग्नि-रस्यै हि सर्व्वो ऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदाप्रीणाति ॥ २९ ॥

यद्वेव द्वादश। द्वादशाक्षरा वै जगती जगती सर्व्वाणि छन्दाꣳसि सर्व्वाणि छन्दाꣳसि प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदाप्रीणाति ॥ ३० ॥

ता एता ऊर्द्ध्वा अस्य समिधो भवन्तीति। प्रजापतिं विस्रस्तं यत्राग्निः समदधात् सोऽब्रवीद्या मत्स्मिता आपीयस्ताभि र्मा प्रीणीहीति ॥ ३१ ॥

स एता अपश्यत्। ऊर्द्ध्वा अस्य समिधो भवन्त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्त्यूर्द्ध्वा शुक्रा शोचीꣳष्यग्नेरित्यूर्द्ध्वानि ह्येतस्य शुक्राणि शोचीꣳषि भवन्ति द्युमत्तमेति वीर्यवत्तमेत्येतत् सुप्रतीकस्येति सर्व्वतो वा ऽअग्निः सुप्रतीकः सूनोरिति यदेनं जनयति तेनास्यैष सूनुः * ॥ ३२ ॥

* 'सूनुः'—इति ग, घ।

ता एता एकव्याख्यानाः । एत मेवाभि यद्येत मेव संस्कुर्यादेतꣳ सन्दध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत् प्रजापति माप्रीणात्तेन प्राजापत्याः * ॥ ३३ ॥

ता व्विषमा व्विषमपदाः । व्विषमाक्षरा व्विषमाणि हि छन्दाꣳस्यथो † यान्यस्याध्यात्म मङ्गानि व्विषमाणि तान्यस्यैताभिराप्रीणाति ॥ ३४ ॥

व्वैश्वानरः पशुपुरोडाशः । व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषा मग्नीना मुपाप्त्यै ॥ ३५ ॥

यद्देव व्वैश्वानरः । ऋतवो ‡ ह्येते यदेताश्चितयोऽग्नयो वा ऽऋतव ऋतवः संव्वत्सरः संव्वत्सरो व्वैश्वानरो यदग्नय इति ब्यादिति तद्दे-चयेद् द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो व्वैश्वानर आग्नेय्यो याज्यानुवाक्या अग्निरूपाणा मुपाप्त्यै कामवत्यः कामाना मुपाप्त्यै ३६ ॥

---

* 'प्राणापत्याः'—इति ग ।

† '०स्यसो'—इति क ।

‡ 'ऋतुषो'—इति क ।

तद्वैके । कृत्यैवैतानि पशुशीर्षाणि विकृत्योपदधत्युभयेनैते पशव इति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्तानि हि तानि तद तथाषाढिः सौश्रोमतेयस्तोपदधुः स ह क्षिप्र ऽएव ततो ममार ॥ ३७ ॥

हिरण्मयान्यु हैके कुर्वन्ति । अमृतेष्टका* इति वदन्तस्ता ह ता अनृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥

मृन्मयान्यु हैके कुर्वन्ति । उत्सन्ना† वा ऽएते पशवो यद्वै किञ्चोत्सन्नमिदं तस्य सर्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्तत एनानधि सम्भराम इति न तथा कुर्याद्यो वा ऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैव ऽउत्सन्नाः स्युः स एतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्ताꣳ ह्येतान् प्रजापतिः प्रथममालेभे श्यापर्णः सायकायनो‡ ऽन्तमोऽथ हैतानेवान्तरेणालभन्त

---

* 'कुर्वन्त्यमृतेष्टका'—इति क ।

† कुर्वन्त्युत्सन्ना'—इति क ।

‡ 'सायक्कायनो'—इति क ।

ऽद्यैतर्ह्यमौ द्वावेवालभ्येते प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मण मुच्यते ॥ ३९ ॥ ४ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्याये प्रथमे अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजात्मकपञ्चपश्वालम्भश्च * । तत्र चतुर्विंशतिः सामिधेन्यः, वैश्वानरः पशुपुरोडाशः, कामपदयुक्ता याज्यानुवाक्याः प्रदर्श्यन्ते । अथ वायव्यैकपश्वालम्भश्च । तत्र सप्तदश सामिधेन्यः, अत्रापि प्राजापत्यः पशुपुरोडाशः, शुक्लपदयुक्ता याज्यानुवाक्याश्च विधास्यन्ते । पशुद्वयसाधारणं मन्यदामीप्रभृतिकं वक्ष्यते । एतत् सर्वं कात्यायनेन सूत्रितम् ;—

"चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभेताऽदक्षिणान्"-इत्युपक्रम्य †, "अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान्"-इति ‡, "समिध्यमानसमिद्धवत्यन्तरे समावापम् इति § अष्ट दधाति, आप्रियो द्वादशोर्ध्वं पञ्चेति"-इति ||,

* "अथ पशूनालभन्ते"—इत्यादि का० श्रौ० सू० १९. १. ८; इहापि भाष्ये परस्तात् (६. २. १. १९.) द्रष्टव्यम् ।

† का० श्रौ० सू० १९. १. ५ ।   ‡ १९, १, ८ ।

§ वा० सं० २७. १—९ । विहितास्य ता इहोत्तरत्र (६. २ ३१, ३५.) ।

|| १९. १. ११ । आप्रियश्च ताः वा० सं० २७. ११—२२ आम्नाताः ।

“एकादशान्तो मासमेवादि करोति , परिहृते पुरुषशक्त्युपमम्” –इति *, वैश्वानरः पशुपुरोडाश उपांशु , पशुदेवता च , आग्नेय्यो याज्यानुवाक्याः कामवत्यः”–इति †, “पशूनालभे-रन् , श्यामतूपरो वा प्राजापत्यः , षड् दद्यात् , वायवे वा नियुत्वते श्वेतलपुटौ द्वे दद्यात् , प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः , काद्व्यौ याज्यानुवाक्याः प्राजापत्यस्य, नियुत्वत्यौ वायव्यस्य , वपाया वा, तुल्य मन्यत् सर्वेषु ‡”–इति ।

तत्र प्रथमं पशुपञ्चकावयवं विधातुं प्रजापतिवृत्तान्तं प्रस्तौति— “प्रजापतिरग्निरूपाण्यभ्यध्यायदिति । पूर्वं प्रजापति-रग्नेरष्टान्यष्टौ रूपाण्यभिध्यातवान् , कुमाररूपात्मना परि-णतम् पश्चिमवेष । स कुमारोऽग्निः मां पिता प्रजापतिरन्वि-च्छतीति ज्ञातवान् । ‘अन्त’ इति प्रश्ने । ‘मे’ मम ‘यद्’ रूपम् ‘एषः’ प्रजापतिः ‘न वेद’ न जानीयात् , ‘तद् रूपम्’ ‘प्रसामि’ प्रवानीति ॥ १ ॥

एवं ज्ञात्वा,— “स एतान् पञ्च पशूनपश्यदिति । तदात्मना परिणतु मिति शेषः । पश्यतियोगात् ‘पशु’-शब्दः सम्पन्न इति दर्शयति— “यदपश्यत् तस्मादेते पशव इति । पश्यतिः प्रत्य-क्षार्थ मस्तीति ज्ञात्वा पशुशब्दो निरुक्तः ॥ २, ३ ॥

“स एतान्निति । ‘तेषु’ पशुषु तादात्म्येन प्रविष्टम् ‘एतम्’ अग्निं प्रजापतिरद्राक्षीत् । पश्यन्त्येष्वग्नि मित्येतस्य देवनिमित्तादधि-करणसाधनः पशुशब्द इत्याह— “तस्मादेवैते पशव इति ॥ ४ ॥

---

* का० श्रौ० १६. १. १२ सू० ।

† का० श्रौ० १६. १. २५ , २६ , २७ सू० ।

‡ का० श्रौ० सू० १६. १. ३८—४२ । दशपुरुषराज्य ६. २. ३ब्रा० मष्टव्यम् ।

"स ऐक्षतेति । 'सः' प्रजापतिः 'ऐक्षत' -स्वमतं विचारितवान् । तदेव दर्शयति— "इमे वा अग्नि रिति । 'अग्निः' 'इमे वै' पुरुषादिपञ्चपशवः एव, ततः पृथक् दृश्यन्त इत्यर्थः । 'इमानेव' अग्न्यात्मकानेतान् पशूनेव आत्मान मभिलक्ष्य 'संस्करवै' पशुभिः स्वरूपैः स्व मात्मानं संस्करिष्य इति पर्यालोचितवान् ।' पशूना मग्न्यात्मकत्वं विशदयति— "यथा वा अग्निरिति । अग्नेर्यथा दीपनधूमाभ्याहितदाहनभक्षसञ्छादनादयो धर्माः, ते पशुष्वपि दृश्यन्ते इत्यतस्तेषां तदात्मकत्वम् । 'चक्षुर्दीप्यते' प्रकाशयुक्तं रोचते, 'अस.' ग्रासो धूमः, 'अभ्याहितं' पुरःस्थितं वस्तु 'दहति', 'एवं' 'बप्सति' भक्षन्ति पशवः । "भस भर्त्सनदीप्त्योः"*, लिटि प्रथमपुरुषबहुवचने उसि द्विर्वचने कृते "घसिभसोर्हलि च" -इति † उपधालोपे रूप मिदम् । 'सीदति' अवसन्नं भवति ।

अग्निभ्यः कामाय पशव इति ‡ सिद्धान्तयितु बहुदेवतार्थं मालम्भनं पूर्वपक्षयति— "तान् नानादेवताभ्य इति । अमून् तान् पुरुषादीन् पञ्च पशून् 'नानादेवताभ्यः' बहुदेवताभ्यः 'आलिप्सत' आलब्धु मैच्छत् । "वैश्वकर्मणं पुरुषम्"-इत्यादिना पञ्चानां पशूनां पृथक्-पृथक् देवतासम्बन्ध उक्तः § ॥ ५ ॥

"स ऐक्षत मानेति । 'स.' प्रजापतिः एवं विचारितवान्,

---

* जु० प० १८ धा० ।

† पा० सू० ६. ४. १०० (वै०) ।

‡ पुरस्तादुक्तं ६४ पृ० १५ पं द्रष्टव्यम् (का० श्रौ० सू० १६. १. ८.) । वक्ष्यति चात्राप्यनुपदम् ६ कं० (५४ पृ० ६ पं०, ६७ पृ० ४ पं०) ।

§ "पशु वैश्वकर्मणं पुरुषं, वारुणं मश्वम्, ऐन्द्रं मृषभं, त्वाष्ट्र मविम्, आग्नेय मज मिति"—इत्यादि (का० श्रौ० सू० १६. १.) कर्कोक्तमत्र विचार्यम् ।

——किमर्थं 'नाना' बह्वीभ्यः 'देवताभ्यः' पशूनालब्धुमिच्छामि ? [ 'अग्नेः उ अहम्'–इति पदच्छेदः ] अहं तु अग्नेरेव 'रूपाणि' 'कामये'। 'हन्त' इति साध्यसाधनयोर्वैयधिकरण्यजनिते आश्चर्ये। 'एतान्' पशून् 'कामाय' कामगुणयुक्ताय 'अग्निभ्य' अग्नये 'आलभे'–'इति' ऐक्षतेत्यन्वयः। कामायाग्निभ्य इति सामानाधिकरण्ये कथं अग्निभ्य इति बहुवचनम् ? तत्राह— "तद् यदग्निभ्य इति। अग्निरूपापेक्षायां बहुवचनम्। 'तान्' अष्टाविति प्रागुक्तम्। "आप्रीतानिति। प्रयाजयाज्यादिभिराप्रीभिः पर्यग्निकरणेन च संस्कृतान्, तदनन्तर मेव 'उदीचो नीत्वा' शामित्रदेशं प्रापय्येत्यर्थः। 'सञ्ज्ञपनं' नाम मारणम् *। मारणार्थं नयेदित्यर्थः ॥ ६ ॥

पशुशीर्षोपधानं विधास्यन्, तदर्थं प्रजापतिकर्तृकं तदुपधानं दर्शयति— "स ऐक्षत या वै श्रीरिति। द्वितीयाबहुवचनान्तम्। अत्र श्रीशब्देन अग्निरूपाणि विवक्षितानि। तानि 'अभ्यध्यासिषम्' ध्यानवानस्मि। 'ताः' इमाः श्रियः 'शीर्षसु' चतुराद्याश्रयेषु वर्तन्ते। 'हन्त'–इति हर्षे। "अतः शीर्षाण्येवेत्यादि। निगदसिद्धम् † ॥

पशुशरीराणामिष्टकोपकारित्वं विवक्षन्नाह— "इतराणीति। अजशरीरस्य यज्ञे उपकरिष्यमाणत्वात् 'इतराणि' पुरुषादीनां चतुर्णां पशूनां 'कुसिन्धानि' मूर्धरहितानि

---

* "परिश्रिते पुरुषसञ्ज्ञपनम्"—इत्यादिः "वैश्यः पुरुषो राजन्यो वा" —इत्यन्तो ग्रन्थः का० श्रौ० सू० १६. १. १४—१७ द्रष्टव्यः।

† तत्प्रकारश्चैव सूत्रं कात्यायनेन—"कण्ठेषु कृत्वा सप्ताहाय शिरांस्याहरति"—इति श्रौ० सू० १६. १. १८।

शरीराणि * 'अप्सु' 'प्राप्लावयत्' प्रक्षिप्तवान् । "चतुर्णां अप्सु काय-प्रासनम्"–इति कात्यायनेन च सूत्रितम् † ।

अजेन शरीरेण यज्ञं समापितवन्तः । एतेन यज्ञसमाप्तौ कारण माह— "नेन्मे यज्ञ इति । 'मे' मम 'यज्ञः' मध्ये 'विनष्टः' विच्छिन्नः 'नेत्' नैव 'असत्' माभूत् 'इति' । यज्ञविच्छेदे प्रजापतेः किं मायात मिति तत्राह— "आत्मा वै यज्ञ इति । एतेन पशुना यज्ञसमापने उपपत्तिं दर्शयति— "एतेन पशुनेष्टा तत् प्रजापतिरिति । 'यथा' येन प्रकारेण 'अग्नेः' 'अन्तं न पर्येत्' कार्त्स्न्येन न परिगतो भवेत्, 'तत्' कर्म 'प्रजापतिः' 'अपश्यत्' दृष्टवानित्यर्थः । यदि सर्वैः पशुभिर्यजेत, तदानी मेव यज्ञसमाप्तेः सिद्धत्वात् अग्नेरेवान्तं परिप्राप्तवान्, अग्निरूपाणि कार्त्स्न्येन प्राप्तवान् भवति, तदयुक्तम्; उत्तरत्र कर्तव्यस्य सद्भावादिति तात्पर्यम् ।

उत्तरत्र सर्वैः पशुभिर्यागः पूर्वपक्षयिष्यते— "तद्वैक आहु-रेवैतैः सर्वैः पशुभिर्यजेत"–इत्यादिना ‡ । यज्ञसमाप्त्यनन्तरं शिष्टस्य अजपशुशरीरस्य च अग्नौ प्रासनं सूत्रितम्— "अजेन चरति, संस्थिते तस्य शीर्षप्रासनम्"–इति § ॥ ७ ॥

यदर्थं अप्सु पशुचतुष्टयकायप्रासनम्, तदिदानी माह— "स ऐक्षत य इमा नालभ अप्सु प्राविप्लव मिति । 'आत्मा-

---

* "योऽग्नौ यद्रुक उ तन्मनान् यास्यां कुसिन्धं सुदृढं बभूव" —इति अथ० सं० १०. २. ३ ।

† का० श्रौ० सू० १६. १. १८ ।

‡ अस्मिन्नेव ब्राह्मणे त्रयोदशीं कण्डीं द्रष्टव्या (५६ पृ० ८ पं०) ।

§ का० श्रौ० सू० १६. १. २१, २२ ।

नम्' पशुदेहानित्यर्थः । 'प्रतिष्ठानां' प्रतिष्ठितानाम् 'एषां' पशूनां 'यत्' शरीरगतं रसादिकम् 'अप्सु' 'प्रत्यतिष्ठत्' प्रतिष्ठितम्, 'ताः' 'अपः' 'समभरत्' सम्भृतवान्; 'यत्' च अस्थिमांसादिकम् 'अस्यां' पृथिव्यां प्रतिष्ठितम्, 'तां' 'मृदं' मृत्तिकां सम्भृतवान्; 'तदुभयम्' 'अपो मृदञ्च' 'सम्भृत्य' संसृज्य 'इष्टका अकरोत्' * ॥ ८ ॥

पक्वा इष्टकाश्चेतव्या इति वक्तु माह— "स ऐक्षत यदि वा इद मित्थ मेव सन्तमात्मान मभिसंस्करिष्य इति । 'यदिदं' अपक्वदशापन्न मिष्टकारूपम् 'इत्थम्' अपाकेन 'एव' 'आत्मानम्' 'अभि'-लक्ष्य 'संस्करिष्ये', तर्हि 'मर्त्यं' मरणधर्मा 'कुणपः' [ जीवरहितो देहः कुणप इत्युच्यते ] अत एव 'अनपहतपाप्मा भविष्यामि'-इति विचार्य, ता इष्टका अग्निना पक्वा अकरोत्; अग्निना पक्व मेव 'हविः' 'अमृतम्' अमरणधर्मकम् 'भवति' इति । अग्निनेष्टकापाकः कर्त्तव्य इति दर्शयति— "तस्मा-दग्निनेष्टका इति ॥ ९ ॥

इष्टकाकरणकालं दर्शयति— "तद्यदिष्ट्वा पशुनाऽपश्यदिति । 'पशुना' यज्ञेन 'इष्ट्वा' इष्टवान् 'इष्टकाः', अत इष्टादनन्तरं कृता इतीष्टका शब्दो निरुक्तः । पशुयागात् पूर्व मिष्टकाकरणं निन्दति— "अनिष्टका ह ता भवन्तीति । 'अथो' 'अथो' पशुयागात् 'पुरा' इष्टकाकरणम् 'अन्यदेव' अयाज्ञीय मित्यर्थः ॥ १० ॥

पशुशीर्षोपधानानन्तर मिष्टकोपधानं पशुशिरःकबन्धसन्धान-

---

* तदुक्तम्—"ततो मृदिष्टकार्थं पक्व"—इति का० श्रौ० सू० १६ ३ २०।

रूपेण प्रशंसति— "तस्यास्ताः श्रिय एतानि तानि पशु-शीर्षाणीति ॥ ११ ॥

यदुक्तं पशुना अग्न्यात्मकत्वम्, तत् प्रशंसति— "स एते सर्वे पशवो यदग्निरिति । यतः पशुना अग्नेः तादात्म्यम्, अतः परस्पर मभिसम्बन्धो दृश्यत इत्याह — "तस्मादग्नाविति । अग्निरूपाणि कामयमानस्य प्रजापतेः पशुयागेन तच्छरीरा-त्मकेष्टकोपधानेन कि मायात मिति, तद् दर्शयति— "ततो वै प्रजापतिरग्निरभवदिति । ततः पशुयागेन तदात्मकोऽग्नि-रेव सम्पन्न इत्यर्थः । चयनस्य अग्निरूपत्वावाप्तिः फल मिति तात्पर्यम् ॥ १२ ॥

पूर्वं च पञ्चालम्भः, तथैकेन पशुना याग उक्तः, इदानीं त मेव पक्षं दृढयितुं सर्वपशुयागं पूर्वपक्षयति— "तदेक आहु-रिति *। 'अत्र' अग्नौ 'सर्वैः' पञ्चभिः पशुभिः 'यजेत'। 'यत्' यदि 'प्रजापतिः' 'सर्वैः' पशुभिः 'अयक्ष्यत' याग मक-रिष्यत्, 'तत् एव अग्नेः अन्तं' 'पर्यैष्यत्' अगमिष्यत्, न तथा कृतवान्। क्रियातिपत्तौ यजतेरेतेश्च लृङ्-प्रयोगः †। तस्मात् सर्वयागकरण मेवाग्न्यन्तगमन मित्यर्थः। तद् दूषयति— "न तथा कुर्यादिति ‡। 'तत्' तर्हि 'देवानाम्' 'इतात्' गमनात् 'इयात्' अपगतो भवतीत्यर्थः। तदेव विवृणोति— 'पथो पथः तदियात्' प्रजापतिस्तस्माद् यज्ञमार्गात् प्रच्यवेतेत्यर्थः ॥

सर्वयागपक्षे बाधां दर्शयति— "अथो किं ततः सम्भरेदिति ।

---

* का० श्रौ० सू० १६ १. १३ ।

† "लिङ्निमित्ते लृङ् क्रियातिपत्तौ"—इति पा० सू० ३.३.१३९ ।

‡ का० श्रौ० सू० १६. १. २४ ।

एवं सति सम्भरणार्थता विरुध्यते ; सम्भरणार्थे हि कुसिन्धानाम् अप्सु प्राशनम् *, तत इष्टका मृद्भिरद्भिश्च कार्या ; अतः सर्वप्रचारे सम्भरणानुपपत्तिरित्यर्थः । कात्यायनस्तच्छाखान्तरवाक्यानुसारेणैकस्मिन्नपि सम्भरणानुपपत्तेः सर्वप्रचार मेकप्रचारं समविकल्पञ्चतवान् । तथाहि— "चतुर्णा मप्सु कायप्रासनम्, ततो मृदिष्टकार्थोपस्य, पञ्चेन प्रचरति, सप्तस्थिते तस्य शेषप्रासनम्, सर्वैरेके, एकस्यापि किं ततः सम्भरेदिति श्रुते."—इति †। एकस्यापि पशोरालम्भे 'किं ततः सम्भरेत्?' तत् तुल्य मेव। तस्माद् विकल्पः सर्वैर्वाऽनेन वेति ॥ १३ ॥

पश्वालम्भन मायतनकरणात्मना प्रशंसति— "यद्व वेवैतान् पशूनालभत इति। आयतनशब्दार्थं माह— "पशं वा इति। कार्यकारणयोरभेदात्। 'तदेतत्' पशुरूप मन्नं 'पुरस्तात् निदधाति', 'तत्' 'एनम्' 'पश्चम्' 'अग्निः' 'उपावर्त्तते' समीपे गतो भवति। यथा लोकेऽन्नार्थी पश्यन्नेवान्नं तत्समीपं गच्छति, तद्वदित्यर्थः ॥ १४ ॥

पशूननुक्रामति— "पुरुषोऽश्व इति। "एतावन्त इति। यतः 'सर्वे पशवः' एतेषु पुरुषगवाश्वादिषस्व अन्तर्भूताः, अत उपजीव्यानां सर्वेषा मन्नरूपाणां पशूना मवरोध इति नानाजातिनिबन्धना स्तुतिः ॥ १५ ॥

पशुगतपञ्चसङ्ख्यां प्रशंसति— "पञ्च भवन्ति, पञ्च ह्येते-

---

* 'कुसिन्धैः कुषितया मृदा अग्निचेष्टकानां दार्ढ्यं सम्पद्यते' —इति कर्कः ( का॰ श्रौ॰ सू॰ १६ १. २३. )। पुरस्ताच्चेह द्रष्टव्यम् ( ७ क॰, ५४ पृ॰ १३ पं॰—६८ पृ॰ १ पं॰ )।

† का॰ श्रौ॰ सू॰ १६ १ १६—२४।

ऽग्नय इति। चितिसङ्ख्यापेक्षया अग्नीनां पञ्चसङ्ख्यावत्त्वम् §। “पञ्चायतनानीति। पञ्चरूपाणि पञ्च स्थानानि कल्पयतीत्यर्थः ॥ १६ ॥

“तद्यदग्निभ्य इतीति। एतद् वाक्यं पूर्ववद् व्याख्येयम् *। अग्निभ्यः कामायेति यदाग्निवद्रूपत्वं तद्रूपापेक्षेति ॥ १७ ॥

पशूना मालम्भनक्रमं विधत्ते— “पुरुषं प्रथम मालभत इति। “पुरुषं ह्यन्वञ्च इति। 'पुरुषम्' 'पशु'-लक्ष्म; पुरुषानुगामी यतोऽयम् इत्यर्थः। एव मुत्तरत्र। “यथापूर्व मिति। पूर्वामालभ्यानतिक्रम्य, यथाक्रम मित्यर्थः। 'यथाश्रेष्ठम्' तत्र ये ये श्रेष्ठाः, तानप्यनतिक्रम्येत्यर्थः ॥ १८ ॥

तेषां बन्धनार्थं रशना विधत्ते— “तेषां विषमा रशनाः स्युरिति। 'विषमाः' स्थौल्यह्रासवत्त्वेन भवन्ति। वैषम्यं च दर्शयति— “पुरुषस्य वर्षिष्ठाथ ह्रसीयसीत्यादि। पुरुषपश्वोः रशनाः 'वर्षिष्ठाः' अतिशयेन वृद्धा भवेत्। अत्र वर्षिष्ठेति स्थौल्यायामापेक्षया। “प्रियस्थिर”-इत्यादिना † वृद्धशब्दस्य वर्षिष्ठादेशः। 'अथ' अश्वपश्वोः 'ह्रसीयसी' आयामस्थौल्याभ्यां ह्रस्वा। तदपेक्षया गोपश्वोः ह्रस्वा। ततो द्वयोः। 'अथ ह्रसीयसी'-इति वीप्सया पूर्वपूर्वरशनापेक्षयोत्तरोत्तरह्रासो विवक्षितः ‡। “यथारूप मिति। पुरुषादिपशूना माकृतिवशादिक्र ममनतिक्रम्येत्यर्थः। “सर्वास्त्वेवेति। 'तु'-शब्दः पक्षा-

* इहापि (का० श्रौ० सू० १६. १. ७.) कर्कोक्तं द्रष्टव्यम्।

† पुरस्तात् (६७ पृ० ५ पं०) द्रष्टव्यम्।

‡ पा० सू० ६. ४. १५७।

§ "वनिष्ठरशनः पुरुषोऽनुपूर्व्या ह्रसीयसाम्" का० श्रौ० १६. १. ८।

न्तरद्योतनार्थः। सर्वा अपि रशनाः 'समाः' सदृशायामस्थौल्या इत्यर्थः। "सर्वास्त्वेव समाः"—इतिवाक्यस्य विवरणम्— "सर्वाः सदृश्य इति। यद्वा, आयामस्थौल्यादिना साम्यं वक्तुं पृथगुपन्यासः * ।

रशनासाम्य इत्युच्यते पशूनां परस्परसाम्यादित्याह— "सर्वे ह्येते समा इति। साम्य मेव दर्शयति— "अग्नयो ह्युच्यन्त इति। यस्मात् एते पशवोऽग्नय इत्युच्यन्ते, तदत्र मिति चोच्यन्ते। पशूना मग्नित्व मन्नात्मकत्वञ्च पूर्व मेव दर्शितम्— "स ऐक्षतेमे वा अग्निः"—इति †, "यद्वेवैतान् पशूनालभत आयतन मेवैतदग्नये करोति, न ह्यनायतने कश्चन रमते, अन्नं वा आयतनम्"—इति ‡ च। 'तेन' अग्नित्वेन सर्वे पशवः 'समाः सदृशाः' इति रशना अपि समाः कार्या इत्यर्थः ॥ १८ ॥

"तदाहुरिति। अग्निचयने पञ्चशताख्या इष्टका उपधेया इति वक्ष्यते §, तत्र पशुपरिग्रहेणैव पञ्चेष्टका अपि परिगृहीता इति अमुं तत् कथं पश्वालम्भमात्रेण तादृशस्याग्नेः स्वीकारः स्यात इति पृच्छति— "कथ मस्यैषोऽग्निरिति। 'अस्य' चिकीर्षमाणस्य यजमानस्य 'पञ्चेष्टकः' 'एषः' प्रक्रममाणः 'अग्निः' 'कथं' 'पशुषु' परिग्रहे 'आरब्धः' प्रक्रान्तो भवतीति। उत्तरत्र करिष्यमाणस्याग्नेः प्रथमं स्वीकारः कर्त्तव्य इत्यभिप्रायः।

पशुष्वेव पञ्चेष्टकाः सम्पादयति—"पुरोडाशकपालेषु न्वेवाप्यत इत्यादिना। चयने वैश्वानरादीनां पशुपुरोडाशानां सम्भरणात्

---

* 'सर्वेषां वा तुल्याः'—इति का० श्रौ० सू० १६. २. १०।

†, ‡ पुरस्तात् (५३ पृ० ५ क०, ५६ पृ० [illegible] क०) द्रष्टव्यम्।

§ द्वितीयप्रपाठकीयद्वितीयब्राह्मणादितस्तद् द्रष्टव्यम्।

तत्कपालेषु मृन्मयीष्टका भाव्यते, कपालानां मृन्मयत्वात् तादृशेष्टकाप्रारम्भः, पश्वालम्भेन पश्विष्टकाप्रारम्भः ।

वपावदानसमये हिरण्यशकलद्वयं निधातव्यम् । तदाहापस्तम्बः—"स्रुवा मुपस्तीर्य हिरण्यशकल मवधाय क्षत्वा वपा मवदाय हिरण्यशकल मुपरिष्टात् कृत्वाभिघारयति"—इति * । तथा चैतरेयकम्—"यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपाज्यस्योपस्तृणाति हिरण्यशकलो वपा हिरण्यशकल आज्यस्योपरिष्टादभिघारयति"—इति † । 'पय' 'पत्' तस्माद् 'वपा मभित.' पूर्वं मुपरिष्टाच्च 'हिरण्यशकलौ भवतः तेन हिरण्येष्टका' भवति । इध्मयूपपरिधिस्वीकारात् वानस्पत्येष्टकाधानेन उलूखलमुसलस्रुगाद्युपधान मुपसञ्चितम् । आज्यप्रोक्षणीपुरोडाशकरणेनाप्स्विष्टका भवति । 'पत.' सर्वासा मिष्टकाना पशुबन्धात् सङ्ग्रहेण ता अपि प्रारब्धा भवन्तीत्यर्थः ॥

यद्यपि सात्त्विको यज्ञ एव, अथापि मृन्मयकपालपश्वादिसम्बन्धात् पञ्चेष्टकासम्पादनं प्रागुक्तम्— "तदाहुः कथ मस्यैषोऽग्निः पञ्चेष्टकः ?"—इत्यादिना ॥ २० ॥

अत्र कात्यायनः "समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न इति नव दधाति"—इति ‡ । दर्शपूर्णमासयोः पञ्चदश सामिधेन्यः § ;

---

* आप० श्रौ० सू० १६-२० प्रश्नयोरग्निचयनप्रसङ्गाख्य मस्ति ।

† ऐ० ब्रा० २. २. ४ ।

‡ का० श्रौ० सू० १६ १. ११ ।

§ यद्यपि तैत्तिरीयसामिधेनीसङ्ख्या एकादश्येव पर माद्यन्तयोः ऋचोस्त्रिस्त्रिरावृत्त्या पञ्चदश्येव सम्पद्यते । तदुक्तं पुरस्तात् "त्रिः प्रथमा मन्वाह त्रिरुत्तमाम् ताः पञ्चदश सम्पद्यते"—इति ( १ का०

अत्र "समिध्यमानो अध्वरे"–इत्यृक् *, समिद्धो अग्न आहुत" –इत्यृक् †, अनयोः प्रकृतिगतयोः सामिधेनीमध्यपठितयो-र्ऋचोर्मध्ये "समास्त्वाग्न ऋतवो वर्द्धयन्तु"–इत्याद्या नव ‡ ऋचो दध्यात्। पूर्वं "प्र वो वाजा अभिद्यवः"–इत्याद्याः पञ्चदश §, इदानीं मध्ये निहिता नव, उभयस्य चतुर्विंशति-र्भवतीति तदेतद् दर्शयति— "तेषां चतुर्विंशतिः सामिधेन्य इति। अग्निसमिन्धनसाधनभूता ऋचः सामिधेन्य इत्युच्यन्ते। "समिधर आधाने षेण्यण्"–इति ‖। षेण्यण् प्रत्ययः। सामि-धेनीगतां चतुर्विंशतिसङ्ख्यां प्रशंसति— "चतुर्विंशत्यर्द्धमासो वै संवत्सर इति। संवत्सरस्य द्वादश मासाः, मासस्य द्वावर्द्धमासौ, इति संवत्सरस्य चतुर्विंशतिरर्द्धमासाः; तादृशः संवत्सर एवाग्निः; "संवत्सरे कुमारोऽजायत"–इति प्रागाम्नानात् ¶। अग्नेः संवत्सरात्मकत्वेन प्रकृतिं किमायातमिति, तत्राह— "यावानग्निरिति। 'अग्निः' 'यावान्' यत्परिमाणः, 'अस्य' अग्नेः 'यावती' यत्परिमाणा 'मात्रा' अवयवा यावन्तः, 'तावता'

---

२ अध्या० ५ ब्रा० ६, ७ क०)। ऋक्संहितायां आम्नातं "प्र वो वाजाः" —इति सूक्तं यद्यपि पञ्चदशर्गात्मकम् (३. २७. १—१५), तथापीह तस्य न ग्रहणं युज्यते, तत्र समिद्धवत्या ऋचोऽभावात् 'समिध्यमान-समिद्धवत्योरन्तरे'—इतिविधानस्य वैयर्थ्यापत्तेः।

* तै० ब्रा० ३. ५. २. ८ (तै० सं० ३ २८. ४)।

† तै० ब्रा० ३. ५. ३. १० (ऋ० सं० ५. २८. ५)।

‡ वा० स० २७ १—९, तै० सं० ४ १. ७ १—९।

§ तै० ब्रा० ३ ५. २. १—११। आद्यन्तयोर्ऋचोस्त्रिस्त्रिरावृत्त्यैव पञ्चदशत्वं सिद्धं सम्पद्यत इत्युक्तम्।

‖ पा० ४ ३ १२० सू० १० वा०। ¶ ४० पृ० २७ पं० द्रष्टव्यम्।

तत्परिमाणैः तैरवयवैरेव 'एनम्' अग्निं 'समिन्द्धे' सन्दीपितवान् भवति। अय अर्थः— अग्नेः संवत्सरात्मकत्वे संवत्सरस्य यावन्तो यावन्तोऽवयवाः मासार्द्धमासाद्यात्मानः, तावद्भिरवयवैः 'एनं' चित्याग्निं 'समिन्द्धे'। अथ वा "यावानग्निरिति, अवयवाग्निपरिमाणवचनम्; "यावत्यस्य मात्रेति, अवयवपरिमाणवचनम्; 'तावता' तत्परिमाणेनाग्निसंवत्सरात्मना 'एनम्' अग्निम् आहवनीयं 'समिन्द्धे' इति। अनेनाग्निः स्वय अग्निना समिद्धो भवतीत्युक्तं भवति। तथा च श्रूयते — "अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा"–इति * ॥ २१ ॥

प्रकारान्तरेण चतुर्विंशतिसङ्ख्यां प्रशंसति— "यद्वेव चतुर्विंशतिरिति। गायत्र्यात्मकत्व अग्नेः प्रागुक्तम्— "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुः गायत्रोऽग्निरिति"– इति †। "तावतैवेति। गायत्र्यक्षरसङ्ख्याकैरवयवैः 'एनम्' अग्निम् समिद्धवान् भवतीति ॥ २२ ॥

"यद्वेवेति। "चतुर्विंशो वै पुरुष इति। चतुर्विंशतिसङ्ख्याकावयवयुक्तः 'चतुर्विंशः'। तानेवावयवान् दर्शयति— "दश हस्त्या इति। हस्तयोर्मध्ये अङ्गुल्यो दश, पादयोर्मध्ये दश, 'चत्वार्यङ्गानि' पादद्वयमुखमस्तकाख्यानि। एवं चतुर्विंशतिरङ्गानि; 'पुरुषः' तत्तावयवयुक्तः 'प्रजापतिः' प्रजापतिरूपः। "स एव पुरुषः प्रजापतिरभवत्"–इत्यादिना पुरुषस्य प्रजापतित्व श्रुतम् ‡। प्रजापतेरग्नित्वञ्च "स पुरुषः प्रजापति-

* ऋ॰ सं १. १२. ६।
† पुरस्तात् ४१ पृ॰ ४पं॰ द्रष्टव्यम्।
‡ पुरस्तात् २ पृ॰ १६ पं द्रष्टव्यम्।

रभवदय मेव स योऽय मग्निश्चीयते"–इति * ; तथा चैवाध्याये "प्रजापतिरग्निरूपाण्यध्यायत्"–इत्युपक्रम्य , "ततो वै प्रजापति-रग्निरभवत्"–इत्यन्तेन † । "तावतैवैन मिति। तावत्परिमाणेन चतुर्विंशत्यक्षरात्मनाग्निना 'एनम्' अग्निं दीपितवान् भव-तीति ॥ २३ ॥

"उभयी गायत्रीश्च त्रिष्टुभश्चान्वाहेति। सामिधेनीषु "प्र वो वाजाः"–इत्याद्या गायत्र्यः ‡, "समास्त्वाग्न ऋतवो वर्ध-यन्तु"–इत्याद्याः त्रिष्टुप्छन्दस्काः §, ता उभयी अनुब्रूयात्, होतेति शेषः।

सामिधेनीगतगायत्रीत्रिष्टुप्छन्दांसि प्राणात्मसमिन्धनरूपेण प्रशंसति— "प्राणो गायत्रीति। गायत्र्यास्त्रिपात्त्वम्, प्राणस्य च प्राणापानव्यानात्मना त्रित्वमङ्गत्वम्। त्रिष्टुभो वीर्यरूप-त्वात् उरसः सकाशादुत्पत्तेः आत्मरूपता। "मध्ये त्रिष्टुभो भवन्तीति। प्रथमं "प्र वो वाजाः"–इत्याद्याः "आ नो अध्वरे" इत्यन्ता गायत्र्यः, अन्ते च "समिद्धो अग्निराहुत इत्याद्या गायत्र्यः, समिध्यमानसमिद्धवत्योर्निधीयमानाः "समास्त्वाग्न ऋतव इत्याद्यास्त्रिष्टुभ इत्यर्थः ||। "मध्ये ह्यय मात्मेति। गायत्रीत्रिष्टुभोः प्राणापानरूपत्वोक्तेः प्राणापानयोरात्मपूर्वपर-भागवर्त्तित्वं प्रसिद्धम्, मध्ये त्रिष्टुभां निधानस्योक्तत्वात्।

---

* पुरस्तात् ३ पृ० १ पं० द्रष्टव्यम्।
† १अ० १—१२ कण्डी (५३—५६ पृ०) द्रष्टव्याः।
‡ तै० ब्रा० ३ ५. २. १—११।
§ वा० सं० २७ १—९, तै० सं० ४. १. ७. १—९।
|| पुरस्तात् २१कण्डीभाष्यं द्रष्टव्यम्।

तत्परिमाणैः तैरंशैरेव 'एनम्' अग्निं 'समिन्धे' सन्दीपितवान् भवति। अय मर्थः— अग्नेः संवत्सरात्मकत्वे संवत्सरस्य यावन्तो यावन्तोऽवयवाः मासार्द्धमासाद्यात्मानः, तावद्भिरवयवैः 'एनं' चित्याग्निं 'समिन्धे'। अथ वा "यावानग्निरिति, अवयवाग्निपरिमाणवचनम्; "यावत्यस्य मात्रेति, अवयवपरिमाणवचनम्; 'तावता' तत्परिमाणेनाग्निसंवत्सरात्मना 'एनम्' अग्निम् आहवनीयं 'समिन्धे' इति। अनेनाग्निः स्वय मग्निना समिद्धो भवतीत्युक्तं भवति। तथा च श्रूयते — "अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा"–इति * ॥ २१ ॥

प्रकारान्तरेण चतुर्विंशतिसङ्ख्यां प्रशंसति— "यद्वेव चतुर्विंशतिरिति। गायत्रात्मकत्व मग्नेः प्रागुक्तम्— "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुः गायत्रोऽग्निरिति"–इति †। "तावतैवेति। गायत्र्यक्षरसङ्ख्यातैरवयवैः 'एनम्' अग्निम् समिद्धवान् भवतीति ॥ २२ ॥

"यद्वेवेति। "चतुर्विंशो वै पुरुष इति। चतुर्विंशतिसङ्ख्याकावयवयुक्तः 'चतुर्विंशः'। तानेवावयवान् दर्शयति— "दश हस्त्या इति। हस्तयोर्भवा अङ्गुलयो दश, पादयोर्भवा दश, 'चत्वार्यङ्गानि' पादद्वयमुखमस्तकाख्यानि। एवं चतुर्विंशतिरङ्गानि; 'पुरुषः' तत्तावयवयुक्तः 'प्रजापतिः' प्रजापतिरूपः। "स एव पुरुषः प्रजापतिरभवत्"–इत्यादिना पुरुषस्य प्रजापतित्व मुक्तम् ‡। प्रजापतेरग्नित्वञ्च "स पुरुषः प्रजापति-

---

* ऋ० सं १. १२. ६।
† पुरस्तात् ४९ पृ० ४ पं० द्रष्टव्यम्।
‡ पुरस्तात् २ पृ० १६ पं द्रष्टव्यम्।

रभरदय मेव स योऽय मग्निश्चीयते"–इति * ; तथाचैवाध्याये "प्रजापतिरग्निरूपाण्यध्यायत्"–इत्युपक्रम्य, "ततो वै प्रजापतिरग्निभवत्"–इत्यन्तेन † । "तावतैवेन सिति। तावत्परिमाणेन चतुर्विंशत्यक्षरात्मनाग्निना 'एनम्' यजिं दीपितवान् भवतीति ॥ २३ ॥

"उभयी गायत्रीश्च त्रिष्टुभयाश्चान्वाहेति। सामिधेनीषु "प्र वो वाजाः"–इत्याद्या गायत्र्यः ‡, "समास्त्वाग्न ऋतवो वर्धयन्तु"–इत्याद्याः त्रिष्टुप्छन्दस्काः §, ता उभयीः अनुब्रूयात्, होतेति शेषः।

अस्तं गायत्रीसमविभागं वारयन्नाह— "भूयसीः पुरस्ताद् गायत्रीरन्वाहेति । "प्र वो वाजा अभिद्यवः"–इत्याद्या एकादश गायत्रः प्रथम मनुवक्तव्याः, अन्ते च "समिद्धो अग्निराहुत"–इत्याद्यायतस्त इत्यर्थः । प्राणा अपि पुरस्तात् नासापुटयोरधिकं निश्चरन्ति, ब्रह्मरन्ध्रगत मित्यभिप्रायः ॥ २४ ॥

इदानीं मध्ये निधीयमाना ऋतवस्तदनुवचनं विधत्ते— "सोऽन्वाह समास्त्वाग्न ऋतवो वर्द्धयन्त्विति * । मन्त्रस्याय मर्थः,— अत्राग्निपदेन प्रजापतिरुच्यते; "ततो वै प्रजापतिरग्निरभवदिति प्रागाम्नानात् † । उत्तरत्र तासां गवाना मग्निरेव द्रष्टा प्रजापतिर्देवतेति वक्ष्यति ‡, अतोऽपि अग्निपदेन प्रजापति रेव सम्बोध्यः । हे 'अग्ने !' संवत्सरात्मक प्रजापते । 'त्वा' त्वां विसस्तम् 'ऋतवः' वसन्ताद्याः, प्रजापतेः संवत्सरात्मकत्वात् तदवयवा ऋतवः 'समाः', 'संवत्सराः' च 'वर्द्धयन्तु' । 'ऋषयः' 'ऋषि' पदेन प्राणा उच्यन्ते; "के त ऋषयः ? इति, प्राणा वा ऋषयः" –इति श्रुतेः § । 'यानि सत्या' सत्कर्माणि, तानि च त्वा वर्द्धयन्तु । अतोऽवयवद्वारैः 'दिव्येन' द्युलोकभवनेन आदित्येन 'सन्दीदिहि' सन्दीप्तो भव । "दीदयतिर्दीप्तिकर्मा"–इति यास्कः ‖ । दीप्य-

---

* "समास्त्वाग्न ऋतवो वर्द्धयन्तु संवत्सरा ऋषयो यानि सत्या । सन्दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्रः"— इति वा॰ सं॰ २७ १ ।

† पुरस्तात् (५६ पृ॰ ६ पं॰) द्रष्टव्यम् ।

‡ एतत्परस्ता देव (६॰ पृ॰ १ पं॰) "स एता अपश्यत्"—इत्यादि ।

§ एतदेव पुरस्तात् द्रष्टव्यम् (१ क॰ ३ पं॰) ।

‖ निघ॰ १ १६ ५ । निरु॰ १०. ७ ६ ।

मन्त्रगतचतुष्टसङ्ख्यां चतुर्दिगात्मना च स्तौति— "यद्वेव चतुर्भिर्यन्ति चतस्रो वै दिश इति । अत्र मन्त्रगत-गायत्र-त्रैष्टुभ-जागता-नुष्टुभैः छन्दोभिः सह पूर्वां चतुःसङ्ख्यां मध्यादिगवान्तर-दिगात्मना स्तौति— "छन्दोभिश्च यजुर्भिश्चादसो तदष्टा-विति * ॥ ४४ ॥ २ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

हस्त ऽएषाभिर्मन्त्र्य पशूनभिमन्त्रयते । एतद्वा ऽएषु देवा अन्वेषिष्यन्तः पुरस्ताद्वीर्यं मदधुस्तथै-वैष्वय मेतदन्वेषिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सोऽश्व मभिमन्त्रयते । प्रतूर्त्तं वाजिन्नाद्र-वेति यद्वै क्षिप्रं तत्तूर्तं मथ यत् क्षिप्रात् क्षेपीय-

---

* गायत्रम्, त्रैष्टुभम्, जागतम्, आनुष्टुभम्, इति चत्वारि छन्दांसि, देवस्य त्वा पृथिव्याः, अभ्रिरसि, हस्त आधाय ( वा० सं० ११. ६क, ६ख, १०, ११.) इति चत्वारि यजूंषीत्येषां सङ्कलनया अष्टाविति सिद्धम् ।

स्तत्. प्रतूर्त्तं व्वरिष्ठा मनु संव्वत मितीयं वै व्वरिष्ठा संव्वदिमा मनु संव्वत मित्येतद्दिवि ते जन्म परम मन्तरिक्षे तव नाभिः पृथिव्या मधि योनिरिदिति तदेन मेता देवताः करोत्यग्निं व्वायु मादित्यं तदश्वे व्वीर्यं दधाति * ॥ २ ॥

अथ रासभम् । युञ्जाथाᳬ रासभं युव मित्यध्वर्युं चैतद्यजमानं चाहास्मिन्यामे व्वृषण्वस्व इत्यस्मिन् कर्मणि व्वृषण्वसू इत्येतदग्निं भरन्त मस्मयु मित्यग्निं भरन्त मस्मत्प्रेषित मित्येतद्रासभे व्वीर्यं दधाति † ॥ ३ ॥

अथाजम् ‡ । योगे-योगे तवस्तरं व्वाजे-व्वाजे हवामह इत्यन्नं वै व्वाजः कर्मणि-कर्मणि तवस्तर मन्नेऽन्ने हवामह इत्येतत् सखाय इन्द्र मूतय इतीन्द्रियवन्त मूतय इत्येतत्तदजे व्वीर्यं दधाति § ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्नि-

---

*, †, § 'दधाति'—इति क, ख।

‡ 'अथाजम्'—इति ग, घ।

यावत्यस्य मात्रा तावतैवैतद्वीर्यं दधाति * ॥ ५ ॥

अथैनान् प्राच उत्क्रमयति । तदेन मेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत् पशवो नेन्माय मग्निर्हिनसदिति ॥ ६ ॥

सोऽश्व मुत्क्रमयति । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वा ऽअशस्तिस्त्वरमाण एह्यवक्रामन् पाप्मान मित्येतद्रुद्रस्य गाणपत्यं मयोभूरेहीति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेन मश्वेनान्विच्छति † ॥ ७ ॥

अथ रासभम् । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्निति यथैव यजुस्तथा बन्धुः पूष्णा सयुजा सहेतीयं वै पूषानया सयुजा सहेत्येतत्तदेनꣳ रासभेनान्विच्छति ‡ ॥ ८ ॥

अथाजम् । पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वदाभरेति पृथिव्या उपस्थादग्निं पशव्य मग्निवदाभरेत्येतत्तदेन मजेनान्विच्छति § ॥ ९ ॥

---

* 'दधाति'—इति क, ख ।

†, ‡, § '०मन्विच्छति'—इति क, ख ।

त्रिभिरन्विच्छति। त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् षडृतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १० ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [३. २.] ॥

पूर्वं ह्याहवनीयस्य दक्षिणप्रदेशे तिष्ठन्नुत्तरगमनायाश्वाः प्राङ्मुखा येऽश्वगर्दभाजास्तिष्ठन्ति, तेषा मिदानीं यथाक्रम मभिमन्त्रणं समन्त्रकं विधित्सुरादावभिमन्त्रणं वीर्यात्मना प्रशंसति— "हस्त एवाभिभवतीति। अभि हस्ते गृहीत्वैव पशूनभिमन्त्रयते * ॥१॥

प्रथम मश्वाभिमन्त्रणं समन्त्रं विधत्ते— "प्रतूर्त्त मिति †। मन्त्रस्याय मर्थः,— हे 'वाजिन्' अश्व! 'वरिष्ठाम्' अतिशयेनोर्वीम्, 'अनुसंवतं' सम्भूतां वनतेः क्विपि "अनुदात्तोपदेशवनति॰"-इति ‡ न-लोपे, "ह्रस्वस्य पिति॰"-इति § तुक्। अस्माभिः क्रियमाणं भजमानम् 'अनु'-लक्ष्य भूमिं, 'प्रतूर्त्तं' त्वरितः

---

* "ईशाय चित्यग्नि माहाय, हस्त आधायैवैना अभिमन्त्रयते"—इति का॰ श्रौ॰ सू॰ १६ २ ८। मन्त्रपाठस्तु—वा॰ सं॰ ११. ८. ११।

† का॰ श्रौ॰ सू॰ १६. २. ९।

‡ पा॰ सू॰ ६ ४ ३७।

§ पा॰ सू॰ ६ १ ७१।

"ज्वरत्वर०"—इत्यूठि * कृते "नसत्त-निषत्तानुत्त-प्रतूर्त-सूर्त-गूर्तानि छन्दसि"—इति † निष्ठा-तस्य नत्वाभावेन निपातनम्। अतिचिरम् 'आद्रव' आगच्छ। हे अश्व! 'ते' तव 'परमं जन्म दिवि' आदित्यरूपेण, 'अन्तरिक्षं' तव 'नाभिः' वायुरूपेण, 'पृथिव्यां' तव 'योनिः' उत्पत्तिस्थानम् अग्न्यात्मकत्वेनेति, अश्वस्य लोकत्रयाभिमानिदेवतात्वेन स्तुतिः कृतेति तात्पर्यम् ‡।

अथ प्रतूर्तपदं व्याचष्टे— "यद्वै क्षिप्रं तत् प्रतूर्त्त मिति। 'क्षिप्रं'—तूर्णम्, 'अथ' 'यत् क्षिप्रात्' अपि 'क्षेपीयः' क्षिप्रतरम्, 'तत् प्रतूर्णम्' इत्युच्यते। क्षिप्रशब्दादीयसुनि "स्थूलदूरयुवह्रस्वक्षिप्र०"—इति § यणादिपरस्य लोपः, पूर्वस्येकारस्य गुणः। उत्तरार्द्धस्य तात्पर्यं माह— "तदेन मेता देवता इति। अभिमन्त्रणेनाश्वस्य किं मायातम्? तदाह— "तदश्वे वीर्यं दधातीति ॥ २ ॥

रासभाभिमन्त्रणं समन्त्रं विधत्ते— "अथ रासभ मिति ‖। अभिमन्त्रयत इत्यनुषङ्गः। 'युवम्' इति द्विवचनेन अध्वर्युयजमानावुच्येते। 'वृषण्वसू' वृषा सेक्ता गर्दभः, स ययोर्वसु धनम्, तौ। 'युवं' युवाम्। 'अस्मिन्' 'यामे' यायते गम्यते प्राप्यते देवैरिति, यस्मिन् सङ्गच्छन्ते यत्र परस्परं देवा इति वा, यामं कर्म, तस्मिन् रासभं 'युञ्जाथाम्'। तं विशिनष्टि— "अग्निं

* पा० सू० ६. ४. २०।
† पा० सू० ८. २. ६१।
‡ मन्त्रस्त्वयम्—वा० सं० ११. १२।
§ पा० सू० ६. ४. १५६।
‖ का० श्रौ० सू० १६. २. ९।

तदिदं विधत्ते— "अथैनान् प्राच इति । 'एनान्' पशून् प्राङ्मुखानुक्रमयेत् । उत्क्रमितैः पशुभिः 'एतम्' रुद्ररूप मग्निम् अन्विष्टवान् भवति । "नोपस्पर्शयतीति । 'यत्' यतः 'पशवोऽग्निः' स्पर्शनेन हिंसा स्यात्, सा माभूदिति । 'हिनसत्'— इति हिंसेः पञ्चमलकारे रूपम् ॥ ६ ॥

उत्क्रमण मनूद्य मन्त्रं विधत्ते— "सोऽश्व मुत्क्रामयतीति । "प्रतूर्वन्नेहीति * । अस्यायमर्थः,— 'अशस्तीः' पाप्मनः 'अवक्रामन्' अभिगमयन् 'प्रतूर्वन्' प्रकर्षेण त्वरमाणः 'एहि' आगच्छ । 'मयोभूः' सुखस्य भावयिता 'रुद्रस्य' पशुपतेः 'गाणपत्यं' गणपतित्वम् 'एहि' गच्छ । अशस्तिपदं व्याचष्टे— "पाप्मा वा अशस्तिरिति । अश्वस्य रुद्रगणपतित्वं प्रतिपादयति— "रौद्रा वै पशव इति । पशुरूपस्याश्वस्य देवता रुद्रः, तस्य गणपतित्व मेहीत्यर्थः । अश्वोत्क्रमणेन नः किं जात मिति, तद् दर्शयति— "तदेन मश्वेनान्विच्छतीति ॥ ७ ॥

रासभोत्क्रमणं विधत्ते— "अथ रासभ मुर्वन्तरिक्ष मिति † । 'उरु' विस्तीर्णम् अन्तरिक्षं 'वीहि' प्राप्नुहि । किं कुर्वन् ? 'गव्यूतिः' गोसञ्चारभूमिं 'स्वस्ति' क्षेमेण कुर्वन्, 'अभयानि' कृण्वन्, 'पूष्णा' पृथिव्या यागभूम्या 'सयुजा' सहायेन सह वीहीति ‡ । मन्त्रस्य पूर्वार्द्धं निगदव्याख्यात मित्याह— "यथैव यजुस्तथा बन्धुरिति । न व्याख्यातु मर्हतीत्यर्थः । उत्तरार्द्ध-पूषपदं विवृणोति— "इयं वै पूषेति ॥ ८ ॥

---

* वा० सं० ११. १५ क ।
† का० श्रौ० सू० १६. २. १० ।
‡ वा० सं० ११. १५ ख ।

अथोत्क्रमणं विधत्ते—"पथ्याजम् पृथिव्या इति * । व्याख्यातोऽयं मन्त्रः † ॥ ८ ॥

उत्क्रमणानन्तरमग्निवत्सङ्ख्या मन्त्राभ्यां स्तौति—"त्रिभिरभिहरति त्रिवृदग्निरिति । पूर्वं येनैषा मन्त्रस्याभ्यासेनाभिमन्त्रणे त्रयो मन्त्रा विनियुक्ताः, इदानीं सूक्तमध्ये त्रय इति तां सङ्ख्यां सम्भूय ऋतुसंवत्सराग्निरूपत्वेन प्रशंसितुं सूक्तं मनुवादयति—"त्रिभिः पुरस्तादभिमन्त्रयते तत् षडिति । स्पष्टोऽर्थः ॥ १० ॥ ४ [ २ २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥

इति षष्ठकाण्डे द्वितीयः प्रपाठकः समाप्तः ‡ ॥

---

* का० श्रौ० सू० १६ । २ । १० ।

† ११६ पृ० १६ पं० (का० सं० ११ । ८ क) द्रष्टव्यम् ।

‡ "कण्डिकासङ्ख्या १०४"—इति क, ख "कण्डिकासङ्ख्या १०४"—इति ग, घ । तत्र १ ब्रा० ३० क०, २ ब्रा० ३० क०, ३ ब्रा० ३३ क०, ४ ब्रा० १० क० अङ्कुसङ्ख्या १०४ इति विवृतम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

तृतीयाध्याये तृतीयं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

प्रदीप्ता एतेऽग्नयो भवन्ति * । अथ सूद मच्छ-यन्तीमे वै लोका एतेऽग्नयस्ते यदा प्रदीप्ता अथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्यो ऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य सूद माहरति तदेनं पुरेभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥

प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥२॥

ते प्रयन्ति । अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्यग्निं पशव्यमग्निवदच्छेम इत्येतत् † ॥ ३ ॥

---

* भवन्ति'—इति ग, घ ।

† 'इत्येतत्—इति ग, घ ।

अथानडुापुरुष मीक्षते । अग्निं पुरीष्य मङ्गि-रस्वद्भरिष्याम इत्यग्निं पशव्य मग्निवद्भरिष्याम इत्येवैतत्तदेन मनडुापुरुषेष्वन्विच्छति * ॥ ४ ॥

अथ वल्मीकवपा सुषिरा व्यक्ते निहिता भवति । ता मन्वीक्षत इयं वै वल्मीकवपेय मु वा इमे लोका एतद्वा एनं देवा एषु लोकेषु व्यिप्राह मैच्छंस्तथैवैन मय मेतदेषु लोकेषु व्यिप्राह मिच्छति † ॥ ५ ॥

अन्वग्निरुषसा मग्र मख्यदिति। तदेन मुषः-स्वैच्छन्नन्वहानि प्रथमो जातवेदा इति तदेन महःस्वैच्छन्ननु सूर्यस्य पुरुत्रा च रश्मीनिति तदेनꣳ सूर्यस्य रश्मिष्वैच्छन्ननु द्यावापृथिवी ऽआत-तन्थेति तदेनं द्यावापृथिव्योरैच्छंस्त मविन्दंस्तथैवैन-मय मेतद्विन्दति तं यदा परा पश्यत्यथ ता मवाश्य-त्यागच्छन्ति मृदम् ॥ ६ ॥

अथाश्व मभिमन्त्रयते । एतद्वै देवा अब्रुवन्

---

* 'न्विच्छति'—इति क, ख।

† 'मिच्छति'—इति क, ख।

पाप्मान मेवापहनानीति श्रमो वै पाप्मा श्रम मेव पाप्मान मपहनानीति तद्य श्रमं पाप्मान मपाघ्नं-स्तथैवास्याय मेतच्छ्रमं पाप्मान मपहन्ति ॥ ७ ॥

आगत्य वाज्यध्वान मिति*। आगतो ह्यस्याध्वा भवति सर्व्वा मृधो व्यधूनुत इति पाप्मा वै मृधः सर्व्वान् पाप्मनो व्यधूनुत इत्येतत्तस्मादु हैतद्यक्षः स्नात्वा† व्यधूनुतेऽग्निरु सधस्थे महति चक्षुषा निचिकीषत इतीदं वै महत् सधस्थ मग्नि मस्मिन् महति सधस्थे चक्षुषा दिदृक्षत इत्येतत्‡ ॥ ८ ॥

अथैन माक्रमयति। एतद्वा एष एतं देवेभ्योऽनुविद्य प्राब्रवीद्यथाय मिहैवेत्येवम्§ ॥ ९ ॥

यद्वेवाक्रमयति। एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतं वज्र मुपरिष्टादभिगोप्तार मकुर्व्वन्नमु मेवा-

---

* 'मिति'—इति क। 'मिति'—इति ग, घ।

† 'स्नात्वा'—इति ग, घ, का०-वेबरयोश्च इदम्।

‡ 'इत्येतत्'—इति ग, घ।

§ 'मिहैवेत्येवम्'—इति ग, घ।

दित्य मसौ वा ऽआदित्य एषोऽश्वस्तथैवास्मा ऽअय मेतं वज्र मुपरिष्टादभिगोप्तारं करोति ॥ १० ॥

आक्रम्य वाजिन्। पृथिवी मग्नि मिच्छ रुचा त्व मिति यजुर्व्वै रुगाक्रम्य त्वं वाजिन् पृथिवी मग्नि मिच्छ यजुषेत्येतद् भूम्या वृत्वाय* नो ब्रूहि यतः खनेम तं वय मिति भूमेस्तत् स्पाशयित्वाय नो ब्रूहि यत एनं खनेमेत्येतत् † ॥ ११ ॥

अथैन मभिमृशति। एतद्वा ऽएनं देवाः प्रोचिवाꣳसं व्वीर्य्येण समार्द्धयंस्तथैवैन मय मेतत् प्रोचिवाꣳसं व्वीर्य्येण समर्द्धयति द्यौस्ते पृष्ठं पृथिवी सधस्थ मात्मान्तरिक्षꣳ समुद्रो योनिरित्येव मसीत्य सीत्येवैतदाह व्विख्याय चक्षुषा त्व मभितिष्ठ पृतन्यत इति व्विख्याय चक्षुषा त्व मभितिष्ठ सर्व्वान् पाप्मन इत्येतन्नोपस्पृशति वज्रो वा ऽअश्वो नेन्मायं वज्रो हिनसदिति ‡ ॥ १२ ॥

अथैन मुत्क्रमयति। एतद्वै देवा अब्रुवन्

---

* 'वृत्वाय'—इति च इष्टं डा०-वेवरमहोदयेन।

† '०मेमेतत्'—इति ग, घ।

‡ 'हिनसदिति'—इति क, ख, ङ, 'हिनसदिति'—इति ग, घ।

कि मिम मभ्युत्क्रमिष्याम इति महत् सौभग मिति तं महत् सौभग मभ्युदक्रमयंस्तथैवैन मय मेतन् महत् सौभग मभ्युत्क्रमयत्युत्क्राम महते सौभगायेत्युत्क्राम महत्ते सौभग मित्येतत्तस्माद्वैतदुक्तः पशूनां भगितमो ऽस्मादास्थानादिति यत्रैतत्तिष्ठसीत्येतद्द्रविणोदा इति द्रविणं ह्येभ्यो ददाति वाजिन्निति वाजी ह्येष वयं स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे ऽस्या इति वय मस्यै पृथिव्यै सुमतौ स्यामाग्नि मस्या उपस्थे खनन्त इत्येतत् * ॥ १३ ॥

अथैन मुत्क्रान्त मभिमन्त्रयते । एतद्वा ऽएनं देवाः प्रोचिवांसं यथा ददिवांसं छन्देनैव समुपास्तुवन्नुपा मह्वयंस्तथैवैन मय मेतदुपस्तौत्युप मह्वयत्युदक्रमीदित्युदक्रमीद् द्रविणोदा इति द्रविणं ह्येभ्यो ददाति वाज्यर्वेति वाजी च ह्येषो ऽर्वा चाकः सुलोकं सुकृतं पृथिव्या मित्यकरः सुलोकं सुकृतं पृथिव्या मित्येतत्ततः खनेम सुप्र-

* 'इत्येतत्'—इति ग, घ।

तीक मग्नि मिति तत यनं स्वनेमीत्येतत् सुप्रतीक मिति सर्व्वतो वा ऽअग्निः सुप्रतीकः स्वो दृशाणा अधि नाक मुत्तम मिति स्वर्गो वै लोको नाकः स्वर्गं लोकए रोहन्तोऽधि नाक मुत्तम मित्येतत् दक्षिणोपसङ्क्रमयति * यथेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य एवामुत्र दक्षिणत † स्यानस्य बन्धुः सोऽत्र ‡ ॥ १४ ॥

अथोपविश्य स्रुद मभिजुहोति । एतद्वै देवा अब्रुवंश्चेतयध्व मिति चिति मिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना एता माहुति मपश्यंस्ता मजुहवुस्ताए हुत्वेमांल्लोकानुखा मपश्यन् ॥ १५ ॥

तेऽब्रुवन् । चेतयध्व मेवेति चिति मिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना एतां द्वितीया माहुति मपश्यंस्ता मजुहवुस्ताए हुत्वा व्विश्वज्योतिषोऽपश्यन्नेता देवता अग्निं व्वायु मादित्य-

---

* 'दक्षिणतोपसंक्रमयति'—इति घ ।

† 'दक्षिणत'—इति क, ख ।

‡ 'सोऽत्रा'—इति क, 'सोऽस्मा'—इति ख, 'सोऽस्मा'—इति ङ ।

‖ 'मपश्यन्'—इति ग, घ ।

मात्रा तावतैवैन मेतद् रेतोभूतꣳ सिञ्चतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्यो ऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैन मेतद् रेतोभूतꣳ सिञ्चति * ॥ २१ ॥

अश्वस्य पदे जुहोति। अग्निरेष यदश्वस्तस्यो ह्यैते ऽग्निमत्येवाहुती हुते भवतः ॥ २२ ॥

अथैनं परिलिखति। मात्रा मेवास्मा ऽएतत् करोति यथैतावानसीत्येवम् † ॥ २३ ॥

यद्वेवैनं परिलिखति। एतद्वै देवा अबिभयु-र्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्यश्रयंस्तथैवास्मा ऽअय मेतां पुरं परि-श्रयत्यश्म्रा वज्रो वा ऽअभ्रिर्व्वज्र मेवास्मा ऽएतदभि-गोप्तारं करोति सर्व्वतः परिलिखति सर्व्वत एवास्मा ऽएतं वज्र मभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृत मेवास्मा ऽएतं वज्र मभिगोप्तारं करोति ॥ २४ ॥

---

* 'सिञ्चति'—इति ख ।

† 'भवतः'—इति क, ख ।

‡ ॰सीत्येवम्'—इति ग, घ ।

परि वाजपतिः कविः *। परि त्वाग्ने पुरं
वयं त्व मग्ने द्युभिरित्यग्नि मेवास्मा ऽएतदुपस्तुत्य
वर्म करोति परिवतीभिः परीव हि पुर आग्ने-
योभिरग्निपुरा मेवास्मा ऽएतत् करोति सा हैषा-
ग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुर मेवा-
स्मा ऽएतत् करोति तस्माद्ध हैतत् पुरां परमं
रूपं यत्त्रिपुरं स वै वर्षीयसा-वर्षीयसा छन्दसा
परां-परां लेखां वरीयसीं करोति तस्मात्
पुरां परा-परा वरीयसी लेखा भवति लेखा
हि पुरः † ॥ २५ ॥

अथैनं मस्यां खनति। एतद्वै देवा अबिभयु-
र्यद्वै न इम मिह रक्षांसि नाष्ट्रा न हन्युरिति
तस्मा ऽइमा मेवात्मान मकुर्वन् गुप्त्या ऽआत्मा-
त्मानं गोप्स्यतीति सा समन्विला स्यादस्येयु
मात्मा भवति यदैव समन्विला योनिर्वा ऽइयं
रेत इदं यद्वै रेतसो योनि मतिरिच्यते ऽमुया तद्

---

* 'कविं'—इति ग, घ।

† 'पुरः'—इति ख, 'पुरः'—इति ग, घ, 'पुरः'—इति च।

नैता ह्येव देवता व्विश्वं ज्योतिस्तथैवैतद्यजमान ऽएते ऽआहुती हुत्वेमांश्च लोकाननुख्यां पश्यत्ये-ताश्च देवता व्विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोती-मांश्च तल्लोकानेताश्च देवता व्यतिषजति ॥ १६ ॥

यद्देवैते ऽआहुती जुहोति। मृदं च तद-पश्च प्रीणाति ते ऽइष्टा प्रीतायैने सम्भरति व्यतिषक्ताभ्यां जुहोति * मृदं च तदपश्च व्यति-षजति † ॥ १७ ॥

आज्येन जुहोति। व्वज्रो वा ऽआज्यं व्वज्र मेवास्मा ऽएतदभिगोप्तारं करोत्यथो रेतो वा ऽआ-ज्यऽ रेत एवैतत् सिञ्चति स्रुवेण व्वृषा वै स्रुवो व्वृषा वै रेतः सिञ्चति स्वाहाकारेण व्वृषा वै स्वाहा-कारो व्वृषा वै रेतः सिञ्चति ‡ ॥ १८ ॥

आ त्वा जिघर्मि मनसा घृतेनेति §। आ त्वा जुहोमि मनसा च घृतेन चेत्येतत् प्रतिक्षियन्तं

---

* ग घ-पुस्तकयोरत्र (।) छेदोऽस्ति ।

† 'घृतिषजति'—इति क ।

‡ 'सिश्चति'—इति क ।

§ 'घृतेनेति'—इति ग, घ, 'घृतेनेति'- इति क, ख ।

भुवनानि विश्वेति प्रत्यङ् ह्येष सर्व्वाणि भुवनानि क्षियति पृथुं तिरश्चा वयसा बृहन्तमिति पृथुर्वा ऽएष तिर्यङ् वयसो बृहन्भूमेन व्यचिष्ठमन्नैः रभसं दृशानमित्यवकाशवन्तमन्नैरन्नाद्दं दीप्यमानमित्येतत् * ॥ १९ ॥

आ विश्वतः प्रत्यञ्चं जिघर्म्मीति † । आ सर्व्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यहीड़मानेन मनसा तज्जोषयेतेत्येतन्मर्य्यश्रीः स्पृहयद्वर्णो ऽअग्निरिति मर्य्यश्रीर्ह्येष स्पृहयद्वर्णो ऽग्निर्नाभिमृशे तन्वा जर्भुराण इति न ह्येषो ऽभिमृशे तन्वा दीप्यमानो भवति ॥ २० ॥

द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतोभूतꣳ सिञ्चति ते यदाग्नेय्यौ तेनाग्निरूपं यत् त्रिष्टुभौ तेनैन्द्र ऐन्द्राग्नो ऽग्निर्यावानग्निर्यावत्यस्य

* 'मित्येतत्'—इति ग, घ ।

† 'जिघर्मीति'—इति ग, घ । 'मिघर्मीति'—इति ख, च ।

भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै वेतसः समृद्धं यत् समम्बिलं चतुःस्रक्तिरेव कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य एवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३.३.] ॥

कात्यायनः— "अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निम्पुरीष्य मिति"-इति *। गार्हपत्यादिषु त्रिष्वग्निषु दीप्यमानेषु "अग्निम्पुरीष्य मिति मन्त्रेण मृत्पिण्डमभिलक्ष्य गच्छेयुरित्यर्थः। तद्विधत्ते— "प्रदीप्ता एतेऽग्नय इति। "अच्छयन्तीति। अभिगच्छन्तीति। ब्रह्माध्वर्युयजमानाः। 'अच्छ'-शब्दस्य "अच्छ गत्यर्थवदेषु"-इति † गतिसंज्ञा। अग्निप्राविध्यं प्रशंसति— "इमे वै लोका इति। 'अग्ने' पूर्वं 'देवाः' 'एभ्यो लोकेभ्य.' 'पुरः' पूर्वस्मिन् प्रदेशे, लोकानां पुरःप्रदेशे कर्मचयन मन्विष्टवन्तः। 'तत्' तस्मात् 'एतान्' लोकत्रयात्मकान् 'अग्नीन्' ('अतीत्य') 'प्रादीप्य' प्रज्वाल्य 'मृदम्' आहरेयुः। अग्निषु ज्वलत्सु मृदानयनम्लोकानां पुरोदेशे मृद्रूप मग्निं खनन्तो भवन्ति ॥ १ ॥

तत्र गच्छतां अध्वर्युप्रभृतीनां प्राङ्मुखत्वं विधत्ते— "प्राञ्चो यन्तीति ॥ २ ॥

अभिगमने मनूद्य मन्त्रं विधत्ते— "ते प्रयन्त्यग्निम्पुरीष्य मङ्गिरस्वदच्छेम इतीति ‡। 'पुरीष्य' पशुहितं मृद्रूपम्, 'अङ्गिरस्वत्' अग्निवत् 'अच्छेम' अभिगच्छामः ॥ ३ ॥

---

* का० श्रौ० सू० १६. २. ११।

† पा० सू० १. ४ ६९।

‡ वा० सं० ११. १६।

पूर्वं पुरुषपश्वोः प्रतिनिधित्वेन अनड्वापुरुष उक्तः *, तस्ये-
दानीं विनियोग माह— "अथानड्वापुरुष मोक्षत इति †। देव-
पितृमनुष्यानर्थकः स इति प्रागुक्तः ‡। 'भरिष्यामः' भाव-
यिष्याम इत्यर्थः। अनड्वापुरुषनिरीक्षणं तेनाग्नेरन्वेषण
मित्येतत् ॥ ४ ॥

अत्र सूत्रम्— "पिण्ड मपरेण व्यक्षे वल्मीकवपां छिद्रां निद-
धाति"-इति §। अश्वादिपशूनां शिरःपुच्छाभिधानीबन्धनात्
पूर्वं स्वपिण्डस्य पश्चिमदेशे 'व्यक्षे' पिण्डाहवनीययोर्मध्ये
सच्छिद्रा वल्मीकवपा निधेयेत्युक्तम्; इदानीं "वल्मीकवपामादाय
छिद्रेण पिण्ड मीक्षतेऽग्निरिरिति"-इति ‖; तदिदं विधिद्वयं
दर्शयति— "अथ वल्मीकेति। पूर्वं मेव व्यक्षे सुषिराया वल्मीक-
वपायाः स्थापनं सूचयितुं 'निहिता'-इति भूतकालवाचि क्तान्तं
पदम्, 'तां तनु' हितां वपां मनुष्यस्य ईक्षेत, अदं वपाच्छिद्रेण
पिण्डं पश्येदित्यर्थः। "इयं वै वल्मीकवपेत्यादेरयमर्थः,—वल्मीक-
वपा नाम 'इयं' भूमिः; तत्कार्यत्वात्। भूमिर्हि सर्वे लोकाः
तत्प्रमुखत्वात् इतरेषां कर्मभूमित्वेन विशिष्टत्वाच्च। पूर्वं 'देवाः'
'एनम्' अग्निम् 'अप्सु' सर्वलोकेषु 'विवाहम्' ऐच्छन्, विवाह्या-
ऽऽसीति सर्वत्रान्विष्टवन्तः, इदानीं तच्छिद्रेण पिण्डनिरीक्षणं
सर्वलोकेषु गूढरूपस्याग्नेर्विशिष्यान्वेषण मिति ॥ ५ ॥

---

* १३० पृ० १६ पं० द्रष्टव्यम्।
† का० श्रौ० सू० १६ २ १३।
‡ १५७ पृ० ४ पं० भाष्यं द्रष्टव्यम्।
§ का० श्रौ० सू० १६ २ ३।
‖ का० श्रौ० सू० १६ २ १४।

निरीक्षणे मन्त्रं विधत्ते — "अन्वग्निरिति *। प्रजापति-रूपेणाग्निः स्तूयते — "अन्वग्निरिति। 'उषसाम् अग्रम्' आदित्यम् 'अनु'-लक्ष्य अग्निम् 'अन्वख्यत्' अनुदीप्यते। 'प्रथमः' आद्यः 'जातवेदाः' जातप्रज्ञः। जातानि भूतानि वेत्तीति वा, जाते जाते विद्यते जायत इति वा जातवेदाः †। अहानि 'अनु'-लक्ष्य दीप्यते। 'पुरुत्रा' बहुषु देशेषु 'सूर्यस्य रश्मीन्' 'अनु'-लक्ष्य दीप्यते। एवं प्रत्यक्षेणोक्त्वा चतुर्थपादेनाग्निं सम्बोध्याह — स त्वं अग्ने। 'द्यावापृथिवी' 'अनु'-लक्ष्य 'आततन्थ' व्याप्तवानसि। "बभूथाततन्थजगृभ्मववर्थ॰"—इति ‡ निगमे इडभावेन निपातितः॥

मन्त्रस्य तात्पर्यम् आह — "तदेनं गुप्त्वेच्छमित्यादिना। "परा पश्यतीति। यदा पिण्डं छिद्रेण पश्येत्, तदा 'इदम्' 'अवख्यति' चिनोति, जानाति। 'अथ' 'ताम्' मृदम् अभिलक्ष्य गच्छेदिति॥६॥

"अथाक्रमिति §। "एतं ह देवा इति। पूर्वं 'देवाः' पथि यातस्य अश्वस्य श्रमलक्षणं पाप्मानम् अपहतवन्तः, एवम् अभिमन्त्रणेन पथि यातस्य श्रमापनयनं भवति॥७॥

मन्त्रं विधत्ते — "आगत्य वाजीति ‖। 'वाजी' वेगवान् बलवान् अश्वः 'अध्वानं' मार्गम् 'आगत्य' 'सर्वाः' 'मृधः' सङ्ग्रा-

---

* वा० सं० ११. १७।
† निरु० ७. ५. १ द्रष्टव्यम्।
‡ पा० सू० ७. २. ६४।
§ का० श्रौ० सू० १६. २. १६।
‖ वा० सं० ११. १८।

मान् 'विधुनुते' कम्पयति । 'महति सधस्थे' पृथिव्यां वर्त्तमानम् 'अग्निम्' 'चक्षुषा' 'निचिकीषते' द्रष्टु मिच्छति ।

द्वितीयं पादं व्याचष्टे— "पाप्मा वै मृध इति । अथ मन्त्र-विधूनन मिति, तदुपपादयति— "तस्माद् हैतदिति । 'अश्वः' 'स्यत्वा' स्यन्दतेः क्त्वा-प्रत्यये इडभावे नलोपे च सति रूपम् । अध्वानं गत्वा स्वशरीरं 'विधूनुते' कम्पयति ॥ ८ ॥

अथ सूत्रम्— "आक्रम्येतेनेन-पिण्ड मधिष्ठापयति"-इति * । एनेनेत्यश्वोऽभिधीयते । "आक्रम्य 'वाजिन्'"-इति मन्त्रेण † पिण्डं तेनैवाश्वेनाधिष्ठापयति आक्रमयतीत्यर्थः । तद् विधत्ते— "अथैन माक्रमयतीति । 'एनं' मृत्पिण्डं अश्वेनाक्रमयेदित्यर्थः । "एतद्वा इति । पूर्वं 'यथा' 'एनम्' अश्वम् अग्निस्थानम् 'अनु-विद्य' लब्ध्वा 'देवेभ्यः' 'अयम्' अग्निः 'इह' देशे तिष्ठतीति पादान्तरेण 'प्राब्रवीत्', 'एवम्' अश्वेन पिण्डाधिष्ठापनं नाम, तस्मादग्नेर्वेदन मित्यर्थः ॥ ९ ॥

आक्रमणं प्रकारान्तरेण स्तोतु मनुवदति— "यद्वेवेति । 'देवाः' रक्षोभ्यो भीतवन्तः 'एतं' 'वज्रम्' वज्ररूप मश्वम् आदि-त्यम् 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकम् 'अकुर्वन्' । आदित्यस्याश्वरूपता प्रागुक्ता ‡ । 'तथैव' तेन प्रकारेण 'अस्मै' पिण्डरूपायाग्नये 'अयम्' अनुष्ठाता अश्वाक्रमणेन 'एतं' वज्ररूप

---

* का० श्रौ० सू० १६ २ १७ ।

† वा० सं० ११. १९ ।

‡ १ ६ ३ ३ (२ भा० ३०७ पृ० १ पं० ) । ३ ४ १. १९, २० (३ भा० २७५, २७६ पृ०) । "असौ वा आदित्य एषोऽश्वः"—इति चाग्निचयने (७ ३ २. १८) । "सूरादश्वं वसवो निरतष्ट" इति च ऋ० सं० १ १६३ २ ।

तत्र आदित्यस्य 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकं 'करोति' कृतवान् भवतीति ॥ १० ॥

मन्त्रं विधत्ते— "आक्रम्य वाजिन्निति *। हे 'वाजिन्' अश्व ! 'त्वं' 'पृथिवीम्' 'आक्रम्य', 'रुचा' "रुच दीप्तौ" †, क्विबन्तात् तृतीयैकवचनम्, अनेन 'वसुधा' 'अग्निम्' 'इच्छ', कुत्र तिष्ठतीत्यन्वेषणं कुरु। 'वृत्वाय' वृणोतिर्वसंज्ञाने क्त्वा, वृत्वायेति क्त्वो यक्। अत्र, वृ-धातुः स्पर्शनार्थः; धातूनामनेकार्थत्वात्। 'भूम्याः'-इति कर्मणि षष्ठी, भूमिम्, 'वृत्वाय' स्पृष्ट्वा, भूप्रदेशं स्पर्शयित्वा 'नः ब्रूहि', 'यतः' यस्मात् प्रदेशात् 'तम्' अद्रूप अग्निं 'खनेम' इति ॥

अत्र मन्त्रे 'रुचा'-इति, 'वृत्वाय'-इति पदे व्याचष्टे— "वसुर्वै रुगिति, "भूम्यास्तत् स्पर्शयित्वायेति। "स्पृश आधनस्पर्शनयोः ‡"-इत्यस्य रूपम्, "स्पर्शयित्वायेति, पूर्ववत् क्त्वो यक् ॥ ११ ॥

अश्वाभिमन्त्रणं विधत्ते— "अथैनं सुस्मृशतीति §। 'लोचिषम्' अश्वाभिस्तिष्ठतीति चोद्यवन्तम्। उपस्पर्शनं नाम पाणितलस्योपरि पाणिधारणम्। मन्त्रं विधत्ते— "द्यौस्ते इति ‖। हे अश्व ! 'ते' तव 'द्यौः' द्युलोकः 'पृष्ठम्' उपरि भागः, 'पृथिवी' 'सधस्थम्' सहस्थानम्, पादावित्यर्थः; 'आत्मा'

---

* वा० सं० ११. १९ ।
† भ्वा० धा० ७४५ धा० ।
‡ भ्वा० उ० ८८७ धा० ।
§ का० श्रौ० सू० १६. २. १८ क ।
‖ वा० सं० ११. २० ।

शरीरम्, 'अन्तरिक्षम्', 'समुद्रः' उदकं 'योनिः' उत्पत्तिस्थानम्। तादृशः 'त्वम्' 'चक्षुषा' 'विख्याय' निरीक्ष्य, 'पृतन्यतः' सङ्ग्रामेच्छून् पुरुषान् 'पाप्मनः इति' 'एतत्' 'अभितिष्ठ' सहस्व। 'पृतना'-शब्दात् क्यचि "कव्यध्वरपृतनस्यर्चि लोपः"-इति * अकारस्य लोपः ॥

पूर्वार्धस्य तात्पर्यम् आह— "इत्यसीत्यसीति। 'द्युलोकोऽसि, पृथिव्यसि'-इत्यादयो वीर्याख्यानाः। उत्तरार्धगतं पृतन्यत्पदं व्याचष्टे— "सर्वान् पाप्मन इत्येतदिति। अत्र सूत्रम्— "अनुपस्पृशन्नुत्क्रामेत्युत्क्रामयति"-इति †। अश्वं तमस्पृशन्नेवोत्क्रामेतिमन्त्रेणाश्वस्योत्क्रामणं कारयेदित्यर्थः। तद् विधत्ते— "नोपस्पृशतीत्यादि ॥ १२ ॥

"अथैनमुत्क्रामयतीति। अश्वोत्क्रमणस्य प्रयोजनं वक्तुं देवानां प्रश्नम् आह— "किमिमम् अभ्युत्क्रमयिष्याम इतीति। किम्प्रयोजनम् उद्दिश्येति तस्यार्थः। प्रयोजनम् आह— "महत्सौभगमितीति। मन्त्रं विधत्ते— "उत्क्रामेति ‡। हे 'वाजिन्!' हे 'द्रविणोदः!' धनस्य दातः!, त्वम् 'अस्मात् स्थानात्' पूर्वमवस्थिताद् देशात् 'उत्क्राम' उद्गच्छ 'महते' 'सौभगाय' ऐश्वर्यायेति तदर्थः। 'अस्याः' पृथिव्याः 'उपस्थे' उपस्थाने 'अग्निम्' उद्दिश्य मृत्पिण्डं 'खनन्तः' वयम् 'अस्याः' पृथिव्याः 'सुमतौ' शोभनदानादियुक्तायां मतौ 'स्याम' भवेमेति ॥

अश्वस्य सौभाग्यम् आह— "तस्माद्वै तदश्वः पशूनामिति।

---

* पा० सू० ७। ४। ३९।
† का० श्रौ० सू० १६। २। १८।
‡ वा० सं० ११। २१।

ये पशवः व्यापनशीलाः शीघ्रगामिनः तेषां मध्ये अयमश्वो 'भगि-तमः' अतिशयेन भाग्यवान्, 'राजवाहनत्वात्। 'अस्मादास्थानात्' -इति पदं व्याचष्टे— "यत्रैतत् तिष्ठसीति ॥ १२ ॥

पुनरप्यश्वस्याभिमन्त्रणं विधत्ते— "अथैन मुत्क्रान्त मभि-मन्त्रयत इति *। पूर्वं 'देवाः' यथा 'एनम्' अग्निम् 'प्रोषिवांसं' [illegible] 'ददिवांसं' धनं दत्तवन्तं लोको 'वन्देत' स्तुवीत, 'एवं' वय मपीति अश्वम् 'अस्तुम', 'अमहयम' अपूजयाम; 'तथा' अनुष्ठातापि अभिमन्त्रणेन स्तुतवान् पूजितवान् भवति ॥

मन्त्रं विधत्ते— "उदक्रमीदितीति †। 'द्रविणोदाः' धनस्य दाता, 'अर्वा' अरणशीलो 'वाजी' वेगवान् अश्वः 'उदक्रमीत्' ऊर्ध्वं पादविक्षेपम्, पृथिव्याः 'सुकृतं' सुष्ठु निष्पादितम् 'सुलोकं' शोभनं लोकम् 'अकः' कृतवान्। स्वकार्यकारणयोरपि साधुत्वं द्योतयितुं उभयत्र सुशब्दप्रयोगः। अकरिति, करोतेर्लुङि "मन्त्रे घसह्वरणशेति ‡ च्लेर्लुकि, गुणे, सिलोपे रूपम्। यद्यपि प्रथमपुरुषैकवचने तिलोपे च रूपं समानम्, तथापि 'अकः सुलोकम्'—इति ब्राह्मणव्याख्यानानुसारेण मध्यमः, तद् व्याख्यात मकरिति। तर्हि करोतेर्लुङि पुनः "कृमृदृरुहिभ्यश्छन्दसि"—इति § अङादेशे, गुणे, मध्यमसकारस्य रुत्वविसर्गयोः कृतयोः रूपम्। 'ततः' तस्मात् प्रदेशात् 'सुप्रतीकं' शोभनावयवम् 'अग्निम्' मद्रूपम्। 'खनेम'। किं कुर्वन्तः? 'नाकं' कमिति सुखनाम,

* का० श्रौ० सू० १६ २ १८।

† वा० सं० ११ २२।

‡ पा० सू० २ ४ ८०।

§ पा० सू० ३ १ ५९।

मृत्संस्कारत्वादुपदेशः *। "तां हुत्वेति। प्रथमाहुतिं हुत्वा लोकत्रयात्मिकाम् 'उखाम्' 'अपश्यन्' ॥ १५ ॥

"तेऽनुपश्यन्निति। द्वितीयाहुतिं हुत्वा विश्वज्योतिर्नामेष्टका दृष्टवन्तः। विश्वज्योतिश्छन्दस्कानां तिसृणा मिष्टकानां देवता-सम्बन्ध माह— "अग्निं वायु मादित्य मिति। "व्यतिषक्ताभ्यां जुहोति"–इति व्यतिषङ्गप्रकारः पूर्वं सूत्रः †, ताभ्यामृग्भ्यां हवनेन प्रीणिताल्लोकान् 'एताः' अग्निवाय्वादित्यस्वरूपा देवता व्यतिषक्तवान् भवति; पृथिवीलोकस्याग्निम्, अन्तरिक्ष-लोकस्य वायुम्, द्युलोकस्यादित्य मिति ॥ १६ ॥

प्रकारान्तरेणाहुतिद्वयं स्तोतु मनुवदति— "यद्वेवैते आहुती इति। आहुतिद्वयेन मृद मपश्च प्रीणितवान् भवति। यतो व्यतिषक्ताभ्या मृग्भ्यां होमः, अतो मृद मपश्चोखार्थं संयोजयति ॥ १७ ॥

होम्यं द्रव्यं विधत्ते— "आज्येन जुहोतीति। आज्यस्य वज्रत्वं प्रागुक्तम् ‡। होमकरणं विधत्ते—"स्रुवेणेति। मन्त्रान्ते 'स्वाहा'-शब्दः प्रयोक्तव्य इत्याह— "स्वाहाकारेणेति। जुहोती-त्यनुषङ्गः ॥ १८ ॥

मन्त्रं विधत्ते— "आ त्वा जिघर्मीति §। मन्त्रस्याय मर्थः,– 'मनसा' 'घृतेन' आज्येन च त्वाम् 'आजिघर्मि'। "इह अरण-

---

* का० श्रौ० १६. २. २१ सूत्रीयं व्याख्यानं द्रष्टव्यम्।

† एतत्पूर्वकण्डिकाप्रकरणे ( १४० पृ० ८ पं० ) द्रष्टव्यम्।

‡ का० १. ३ ४. ४ ( १ भा० ११२ पृ० ) द्रष्टव्यम्।

§ वा० सं० ११. २३।

दीध्योः" *। आ जुहोमि, आसिञ्चामि, आज्यं क्षिपामीत्यर्थः। अग्निं विशिनष्टि पादत्रयेण— 'विश्वा सर्वाणि भुवनानि प्रति क्षियन्तम्' सर्वत्र भूतजातेषु निवसन्तमित्यर्थः। 'तिरश्चा' —इति भावपरो निर्देशः, 'पृथु' विस्तृतम्। यद्वा, 'तिरश्चा' —इति धूमविशेषणम्; 'वयसा' धूमेन 'बृहन्तम्'। अत एव 'व्यचिष्ठं' व्यापनवन्तम्, अवकाशवन्तम्। 'अन्नैः' स्वस्मिन् हुतैर्घृतादिभिः, 'रभसम्' उत्साहवन्तम्। अत एव 'दृशानं' दर्शनीयं, दीप्यमानम्। अग्निं त्वा आजिघर्मीति सम्बन्धः॥

मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "आ त्वा जुहोमीति। व्यचिष्ठ-रभस-पदयोर्व्याख्यानम्—"अवकाशवन्त मन्नाद मिति॥ १८॥

द्वितीयं मन्त्रं विधत्ते—'आ विश्वत इति †। अस्य अर्थः,— 'विश्वतः' सर्वतः 'प्रत्यञ्चं' प्रत्यगात्मतया प्रतीयमान मग्निम्, 'अरक्षसा' रक्षोदोषरहितेन 'मनसा' युक्तः अहम् 'आजिघर्मि' आसिञ्चामि। 'तत्' घृतं 'जुषेत' सेवेत इति परोक्षनिर्देशः, युष्मच्छब्दसमानार्थो भवच्छब्दाध्याहारो वा। 'मर्यश्रीः' मर्यतेः कर्मणि क्विप्, मर्यैर्मनुष्यैराश्रयणीयः। 'स्पृहयद्वर्णः' स्पृहयन् परेषां रुचि मुत्पादयन् वर्णो यस्य, अतिभास्वररूपत्वात्। 'तन्वा' शरीरेण 'जर्भुराणः' दीप्यमानो 'अग्निः' 'नाभिमृशे' तुमर्थे केन्प्रत्ययः ‡, अभिमर्शनीयो न भवति॥

* जु० प० १४ धा० ।
† वा० सं० ११. २४ ।
‡ पा० सू० ३. ४. ९ । दृश्यम् ।

"स एतान् पञ्च पशून् प्राविशत्, स एते"—इत्यादिना * ॥ २२ ॥

अत्र सूत्रम्— "अभ्र्या त्रिः परिलिखति परिवाजपतिरिति, दक्षिणोत्तरयोरुत्तरयेति †। एतं मृत्पिण्डं "परि वाज पतिः"—इत्यादिभिस्तिसृभिः ‡ उत्तरोत्तराधिकच्छन्दस्काभिः त्रिवारं परिलिखेदिति। तदिदं विधत्ते— "अथैनं परिलिखतीत्यादि। परिलेखनेन 'अस्मै' मृद्रूपायाग्नये 'मात्रां' परिच्छेदम्, इयत्ताम् 'करोति' तत्तावान् भवति। तदेव विवृणोति— "यथैतावानिति ॥ २३ ॥

"वज्रेण परिलिखतीति। परिलेखनं प्रशंसितुं देवदृष्टान्त माह— "एतद्वै देवा इति। 'एतां पुरं' रेखारूपां पुरं परिचितवन्तः। परिलेखने साधनं विधत्ते— "अभ्र्येति §। "सर्वतः परिलिखतीति। चतुर्दिशं तत्र मित्यर्थः। परिलेखनस्य त्रित्वं विधत्ते— "त्रिष्कृत्व इति। त्रिवार परिलेखनेन 'त्रिवृत्' त्रिगुणितं 'वज्रम्' 'अस्मै' मृत्पिण्डाय 'अभिगोप्तारं' रक्षकं कृतवान् भवति ॥ २४ ॥

मन्त्रं विधत्ते— "परि वाजपतिरिति। आद्या गायत्री ॥, "परि त्वाग्ने पुरं वयम्"—इति द्वितीया अनुष्टुप् ¶, "त्व मग्ने द्युभिः"—इति तृतीया त्रिष्टुप् **; तिस्रोऽप्याग्नेय्यः। यद्गो-

* पुरस्तादिहैव (५३ पृ० ६ पं०) द्रष्टव्यम्।
† का० श्रौ० सू० १६ २ २२ क।
‡ वा० सं० ११. २५, २६, २७।
§ का० श्रौ० सू० १६ २ २२ ख।
॥ वा० सं० ११ २५।
¶ वा० सं० ११ २६।    ** वा० सं० ११. २७।

ऽग्निदैवत्यः, अत एताभिः परिलेखनेन अग्नि मेव 'वर्म' कवचं कृतवान् भवति ।

मन्त्रत्रयगतं परिशब्दं स्तौति— "परिवतीभिरिति । यतो रेखाः पुरात्मिकाः, अतस्तासां परिशब्दयुक्ताभिः ऋग्भिः करणेन प्राकारपरिवृतपुरात्मकत्व मुक्तम् । मन्त्रगतं त्रित्वं प्रशंसति— "तिसृभिस्त्रिपुर मेवेति । प्राकारत्रयपरिवृतत्वं पुरा मुत्कृष्टतमं रूपम् । "स वै वर्षीयसेत्यादि । अस्याय मर्थः, 'सः' अध्वर्युः 'वर्षीयसा' वृहता, ततोऽपि 'वर्षीयसा' वृहत्तरेण 'छन्दसा', उत्तरोत्तराधिकच्छन्दस्काभिः ऋग्भि रित्यर्थः । छन्दांसि इदानीं प्रदर्शितानि, ताभिर्ऋग्भिः रेखा अपि उत्तरोत्तरवरीयसीं महत्तरां करोति । तस्मादुत्तरोत्तराधिकरेखात्रयकरणेन प्राकारभूतत्र्याकारेण पुरेण मृत्पिण्डं रक्षितवान् भवतीति ॥ २५ ॥

अथ पिण्डखननं विधत्ते— "अथैन मध्यं खनतीति * । 'अस्यां' भूमौ 'एनत्' पिण्डं खनेदिति । आधेयाधिकरणभावेन भूमिमृत्पिण्डयोः प्रतीयमानं पार्थक्य मपाकरोति— "एतद्वै देवा इति । पूर्वं देवा रक्षोभीत्या 'तस्मै' पिण्डाय 'इमां' भूमि मेव 'आत्मानं' स्वरूपम् 'अकुर्वन्' । स्वरूपं स्वरूपरक्षकं भविष्यतीत्यतो हेतोः रक्षणाय 'सा' खन्यमाना भूमिः 'समबिला' चतुर्दिशं समानविवरा कर्तव्या । अय मर्थः,— यावत्य उखापादादय इष्टकाः कर्तव्याः, तावत्परिमाण मेवेदं खनेत् । समबिलत्वं स्तौति— "यदेव समबिलेति । 'इयं' भूमिः 'योनिः' अग्न्युत्पत्तिस्थानम्, 'इदं रेतः' उखा-

---

* का० श्रौ० सू० १६ ३. २२ ।

पादाग्रे खन्यमानं मत्स्यरूपं रेतः; अत्र 'रेतसः' सम्बन्धी बिन्दुः, यावत् 'योनिम् अतिरिच्यते', तावत् उखादिपर्याप्तां मृत् खनितुं शक्तेत्यर्थः। "चतुःस्रक्तिरेव कूप इति *। मृदर्थं खन्यमानः कूप चतुरस्रः कर्तव्यः। स्रक्तीश्चतुर्दिगात्मना स्तौति — "चतस्रो वै दिश इति † ॥ २६ ॥ १ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ३ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मराजिद्विपसहितरथौ सायणः शिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं मथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुल. स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।

---

* "एवैतस्य स्रग्माकारो रज्जुरिव हि सर्पाः, कूपा इव हि सर्पाणामायतनानि"—इति इतः पूर्वस्मिन् काण्डे श्रुतम् ॥ ५. ३ ।

† "अभ्रिं खनन्त उपस्थे पृथिव्याः"—इति च (वा० सं० ११ ३१.) ।

पाञ्चीत्थं प्राज्यजम्भा लवणज मृत्स्नः शार्करं वार्कतेजाः,
रत्नाब्धो रत्नरूपं गिरि मखन मुदा पावकाक्लिष्टपार्यः ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

* पञ्चमाद्यारभ्य: पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

( अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् . )

---

अथैनमतः खनत्येव* । एतद्वा ऽएनं देवा अनुविद्याखनंस्तथैवैनमयमेतदनुविद्य खनति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामीति सवितृप्रसूत एवैनमेतदेताभिर्देवताभिः पृथिव्या उपस्थादग्निं पशव्यमग्निवत् खनति ॥ १ ॥

ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमिति । ज्योतिष्मान्वा ऽअग्निः † सुप्रतीको ऽजस्रेण भानुना दीद्यतमित्यजस्रेणार्चिषा दीप्यमानमित्येतच्छिवं प्रजाभ्यो ऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनाम इति शिवं प्रजाभ्यो ऽहिंसन्तं पृथिव्या उपस्थादग्निं पशव्यमग्निवत् खनाम इत्येतत् ‡ ॥ २ ॥

---

* 'खनत्येव'—इति ग, घ ।

† 'ऽयमग्निः'—इति ग, घ ।

‡ 'इत्येतत्'—इति ग, घ ।

द्वाभ्यां खनति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् खनत्यथो द्वयं ह्येवैतद्रूपं मन्त्रापस्य ॥ ३ ॥

स वै खनामि खनाम इति खनति। खनामीति वा ऽएतं प्रजापतिरखनत् खनाम इति देवास्तस्मात् खनामि खनाम इति * ॥ ४ ॥

स वा ऽअभ्र्या खनन्। व्याचा खनामि खनाम इत्याह व्याग्वा ऽअभ्रिरारम्भायैवेयं वैणवी क्रियते व्याचा वा ऽएत मभ्र्या देवा अखनंस्तथैवैन मय मेतद्वाचैवाभ्र्या खनति † ॥ ५ ॥

अथैनं कृष्णाजिने सम्भरति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैन मेतत् सम्भरति लोमतश्छन्दाꣳसि वै लोमानि छन्दः स्वेवैन मेतत् सम्भरति तत्तूष्णी मुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्वै यज्ञो ऽनिरुक्तो वै प्रजापतिस्तस्तस्योपरि वध्नः प्राचीनग्रीवे तद्धि देवत्रा ‡ ॥ ६ ॥

* 'इति'—इति ग, घ।
† 'खनति'—इति क।
‡ 'देवत्रा'—इति ग, घ।

अथैनं पुष्करपर्णे सम्भरति । योनिर्वै पुष्कर-पर्णं योनौ तद् रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत् प्रजनिष्णु भवति तन्मन्त्रेणोपस्तृणाति त्वामग्ने मन्थो त्वाक् पुष्करपर्णम् ॥ ७ ॥

अपां पृष्ठ मसि योनिरग्नेरिति । अपाए ह्ये-तत् पृष्ठं योनिर्ह्येतदग्नेः समुद्र मभितः पिन्व-मान मिति समुद्रो ह्येतदभितः पिन्वते वर्द्धमानो महां२॥ऽआ च पुष्कर ऽइति वर्द्धमानो मही-यस्व पुष्कर ऽइत्येतद्दिवो मात्रया वरिम्णा प्रथ-स्वेत्यनुविमार्ष्ट्यसौ वा ऽआदित्य एषोऽग्निर्नो हैत मन्यो दिवो वरिमा यन्तु मर्हति द्यौर्भूत्वैनं यक्ष्ये-त्येवैतदाह ॥ ८ ॥

तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिन मियं वै कृष्णाजिन मियमु वै यज्ञो ऽस्याए हि यज्ञस्तायते द्यौः पुष्करपर्ण§ मापो वै द्यौरापः पुष्करपर्ण मुत्तरो वा ऽअसावस्यै ॥ ९ ॥

अथैनं ऽअभिमृशति । सञ्ज्ञा मेवास्या मेतत्

§ 'द्यौ पुष्कर०'–इति क, ख, 'द्यौष्पुष्कर०–इति ग ।

द्वाभ्यां खनति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् खनत्यथो द्वयं ह्येवैतद्रूप मुच्चापस्य॥ ३॥

स वै खनामि खनाम इति खनति। खनामीति वा ऽएतं प्रजापतिरखनत् खनाम इति देवास्तस्मात् खनामि खनाम इति *॥ ४॥

स वा ऽअभ्या खनन्। व्वाचा खनामि खनाम इत्याह व्वाग्वा ऽअभिरारम्भायैवेयं व्वै वाची क्रियते व्वाचा वा ऽएत मभ्या देवा अखनंस्तथैवैन मय मेतद्वाचैवाभ्या खनति †॥ ५॥

अथैनं कृष्णाजिने सम्भरति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैन मेतत् सम्भरति लोमतश्छन्दाꣳसि वै लोमानि छन्दः स्वेवैन मेतत् सम्भरति तत्तूष्णी मुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्व्वै यज्ञो ऽनिरुक्तो वै प्रजापतिस्तस्तस्योपरि यजुः प्राचीनग्रीवे तद्धि देवत्रा ‡॥ ६॥

* 'इति'—इति ग, घ।
† 'खनति'—इति क।
‡ 'देवत्रा'—इति ग, घ।

करोति शर्म च स्थो व्वर्म च स्थ इति शर्म च ह्येते व्वर्म चाच्छिद्रे बहुले ऽउभे ऽइत्यच्छिद्रे ह्येते बहुले ऽउभे व्यचस्वती संव्वसाथा मित्यवकाशवती संव्वसाथा मित्येतद् भृत मग्निं पुरीष्य मिति बिभृत मग्निं पशव्य मित्येतत् * ॥ १० ॥

संव्वसाथाᳪ स्वर्विदा। समीची ऽउरसात्मनेति संव्वसाथा मेनᳪ स्वर्विदा समीची ऽउरसा चात्मना चेत्येतदग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्त मजस्र मिदित्यसौ वा ऽआदित्य एषोऽग्निः स एष ज्योतिष्मानजस्र एते ऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्त मजस्र मिदिति ॥ ११ ॥

द्वाभ्या मभिमृशति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाभ्या मेतत् सम्भूं करोत्यथो द्वयᳪ ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [४. १.] ॥

* 'मित्येतत्'—इति ग। 'मित्येतत्'—इति घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ खननविधिं, खनन मन्त्रं विधत्ते— "अथैनमतः खनतीति *। 'अतः' अतःस्थात् कूपात् 'अनुविद्य' लब्ध्वा। देवस्य त्वेति मन्त्रस्य तात्पर्यमाह— "सवितुः प्रसूत्या इति † ॥ १ ॥

खनने द्वितीयमन्त्रमाह— "ज्योतिष्मन्तं त्वाग्न इति ‡। अयमर्थः। हे 'अग्ने!' 'ज्योतिष्मन्तं' ज्योतिर्युक्तं 'सुप्रतीकं' सुमुखावयवम्, 'अजस्रेण' अनवच्छिन्नेन 'भानुना' तेजसा 'दीद्यतं', व्यत्ययेन शतृप्रत्ययः, दीप्यमानम्; 'शिवं' शान्तम्, 'प्रजाभ्यः' प्रजार्थं शिवमिति सम्बन्धः; 'अहिंसन्तं' प्राणिनां हिंसामकुर्वाणम्। पृथिव्यादि व्याख्यातम्। तादृशमग्निं भूप्रदेशादग्निवत् खनामः अश्वयैव इति ॥ २ ॥

खननमन्त्रगतां द्वित्वसङ्ख्यां यजमानरूपाभ्यामवता प्रशंसति— "द्वाभ्यां खनति द्विपादिति। प्रकारान्तरेण स्तौति— "अथो द्वयमिति। मृत्तिका उदकानि चेति द्वयमित्यर्थः ॥ ३ ॥

---

* का० श्रौ० सू० १६. २. २२।

† "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत् खनामि" वा० सं० ११. २८. १।

‡ "ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम्। शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामः"—इति वा० सं० ११. २८. २।

यत् "देवस्य त्वा"–इति पूर्वमन्त्रः, तत्र खनामीत्येकवचनम् *, ज्योतिष्मन्त मिति द्वितीयमन्त्रे खनाम इति बहुवचनम् †, तस्योभयस्य निर्वाहं आह— "स वै खनामीति। प्रजापतिविवक्षया एकवचनम्, देवविवक्षया बहुवचनम्। ते च अग्निकर्माण्यत्य-तिष्ठन् ॥ ४ ॥

प्रागुक्तं खननसाधनं विदधत् तस्य वाग्रूपतां आह— "स वा अभ्र्याखनदिति। यदि वाग्भिस्तर्हि वाचैव खननं युक्तम्, किमभ्रिकरणेनेति, तत्राह— "आरम्भायेति। 'आरम्भाय' आलम्भनायैव इयं वैणवी अभ्रिः ‡ क्रियते ॥ ५ ॥

अत्र कात्यायनः— "कृष्णाजिन मास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णं मपाम्पृष्ठ मिति, विमार्ष्टि मद्‌ दिव इति, आलभत उभे शर्म च स्थ इति"–इति §। अथ अर्थः। उत्तरतो देशे कृष्णाजिनं प्राग्ग्रीवं उत्तरलोमम् तूष्णीं आस्तीर्य, तस्मिन् कृष्णाजिने अपाम्पृष्ठमितिमन्त्रेण ‖ पुष्करपर्णं आस्तृणाति। एतत् पुष्करपर्णं दिवो मात्रयेति ¶ चतुर्थपादेन विमार्ष्टि। ततः कृष्णाजिन पुष्कर-पर्णे "शर्म च स्थो वर्म च स्थः"–इति ** मन्त्राभ्यां आलभेतेति।

---

*, † २०५ पृ० द्वितीयतृतीयटीप्पण्युद्धृतयोर्मन्त्रयोरन्त्ये पदे द्रष्टव्ये।

‡ वैणवी, कल्माषी, सुषिरा, प्रादेशमात्री, अन्यतःक्ष्णुत्, उभयतःक्ष्णुत्, तीक्ष्णा, औदुम्बरी, वैकङ्कती, अरत्निमात्री अभ्रिर्भवति। इहैव काण्डे पुरस्तात् (३. १. ३०.) द्रष्टव्यम्।

§ का० श्रौ० सू० १६. २. २३, २४, २५।

‖ वा० सं० ११. २८. १।

¶ वा० सं० ११. २८. २।

** वा० सं० ११. ३०, ३१।

तदिदं ब्राह्मणशेषेण विधीयते— "अथैनं कृष्णाजिन इति । यद्यपि कृष्णाजिनस्योपरि पुष्करपर्णे मृत्पिण्डसम्भरणम्, तथापि कृष्णाजिनसम्बन्धोऽप्यस्तीति मत्वा तस्मिन् सम्भरणोक्तिः । "लोमत इति । लोमवत्प्रदेशे ।

कृष्णाजिनास्तरणं समन्त्रक मित्याह— "तत् तूष्णी मिति । तूष्णी मुपस्तरण मुपपादयति— "यज्ञ इति । यज्ञस्य कृष्णाजिनत्वम्; "कृष्णो रूपं कृत्वोदक्रामत्"–इत्याम्नानात् * । यज्ञस्य प्रजापतित्वम्; प्रजापतिदेवत्यत्वात् । प्रजापतिर्हि सकलस्थूलसूक्ष्मप्रपञ्चात्मत्वेनाय मीदृगिति निर्वक्तु मनर्हत्वात् अनिरुक्तः । तस्मात् तद्रूपस्य कृष्णाजिनस्यापि आस्तरणम् 'अनिरुक्तम्', अमन्त्रक मित्यर्थः । तदास्तरणस्य प्रदेशं विधत्ते— "उत्तरत इति । आस्तरणस्तावकं ब्राह्मण मुत्तरत्र वक्ष्यत इत्याह— "तस्योपरि बन्धुरिति । "प्राचीनग्रीवेति । ग्रीवाप्रदेशः प्राचीनो यथा भवति तथा आस्तरणीयम् । 'देवत्रा' देवेषु भवति "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्"–इति † देवशब्दात् 'त्रा'-प्रत्ययः ॥ ६ ॥

कृष्णाजिनस्योपरि विधातव्ये पुष्करपर्णे मृत्पिण्डसम्भरणं दर्शयति— "अपेम मिति । "योनिरिति । यतोऽग्निः पुष्करपर्णाद् जातः, तस्मात् तत् योनिरूपम्, अग्निश्च रेतोरूपः; इदानी मुत्पद्यमानत्वात् 'प्रजनिष्णु' प्रजननशीलम् । "वाक् पुष्करपर्ण मिति । अग्निवाचोरन्यत्र तादात्म्यश्रवणात् ‡— "अग्नि-

* श० ब्रा० १. १. ४. १ (१ भा० ७१ पृ० ) ।

† पा० सू० ५. ४. ५६ ।

‡ तै० आर० २. ४. २ ।

वाग् भूत्वा मुखं प्राविशत्"—इति । पुष्करपर्णादग्निजननात् कार्यकारणयोरभेदोपचारेण वागेव पुष्करपर्ण मित्युक्तम् ॥ ७ ॥

तदास्तरणे मन्त्रं विधत्ते— "अपाम्पृष्ठ मसीति * । हे पुष्करपर्ण ! 'अपाम्पृष्ठम्' उपरिस्थानम् 'असि', 'अग्नेः योनिः' च 'असि', 'समुद्रः' समुन्दनशील मुदकम् अभितः 'पिन्वमानं' वर्धमानं भवसि, किञ्च 'पुष्करे' 'वर्धमानः' जात एव 'आ' सर्वतः 'महान्' आस्तरणात् महत्त्वम् ; अत एव 'आ महान्'—इति पदद्वयस्य 'महीयस्व'—इति व्याख्यानम् ।

अस्मिन्नपादेन विसर्जनं विधत्ते— "दिव इति † । 'दिवः' द्युलोकस्य मात्रया परिमाणेन 'वरिम्णा' अतिशयेनोरुणा त्वं 'प्रथस्व' विस्तीर्णो भव । पादं व्याचष्टे— "असौ वा आदित्य इति । यतः 'एषः अग्निः' 'आदित्यः', अतो लोकत्रय मस्य 'वरिमा' उरुत्वम्, 'एतम्' आदित्यात्मकं 'अग्निं' परिच्छेत्तुं नार्हतीति । अतो 'द्यौः' द्युलोकात्मकं 'भूत्वा', 'एनं' कृत्स्नं 'यच्छ' परिच्छिन्नं कुर्विति पुष्करपर्णप्रार्थना ॥ ८ ॥

तदास्तरणस्य प्रदेश माह— "तदुत्तरं कृष्णाजिनादिति । 'तत्' पुष्करपर्णं 'कृष्णाजिनात्' 'उत्तरं' तस्योपरि 'आस्तृणाति' एतस्योपरि अस्यास्तरणं भूलोकद्युलोकात्मना प्रशंसति— "असौ वा इति । कृष्णाजिनपुष्करपर्णयोः भूलोकद्युलोकात्मत्वेन तयोर्यथा उत्तराधरभावः, एवं लोकयोरुत्तराधरभावो द्रष्टव्य इत्याह— "उत्तरो वा असावस्या इति । 'असौ' द्यौः । 'अस्याः' भूम्याः ॥ ९ ॥

---

* वा० सं० ११. २९. १ ।

† मन्त्रान्तर मिदम्, कर्मान्तरे विनियुक्तत्वात् (वा० सं० ११. २९. २.) ।

अथैतयोः कृष्णाजिनपुष्करपर्णयोः युगपदभिमर्शनं विधत्ते— "अथैनेऽभिमृशतीति *। शक्यत्वादुभयोर्युगपदालम्भनम्। "स्वङ्गामिति। समानसङ्गम् 'एतत्' एतेन अभिमर्शनेन 'करोति' कृतवान् भवति। तत्र मन्त्रद्वयं विधत्ते— "शर्म च स्थ इति †। कृष्णाजिन पुष्करपर्णे सम्बोध्ये। 'शर्म' शरणं 'च' 'स्थ', युवयोरुपरि निधीयमानस्य मृत्पिण्डस्य 'शरणं' भवथ, 'वर्म' कवचं 'च' अस्य 'स्थ' भवथ। 'अच्छिद्रे' छिद्ररहिते 'बहुले' महामानो 'उभे' युवां 'व्यचस्वती' व्याप्तिमत्यौ भूत्वा 'संवसाथाम्' आच्छादयतां सदम्। वसेराच्छादनार्थस्य ‡ रूपम्। 'पुरीष्यं पशव्यम् अग्निम्' 'बिभृतम्'। भृञो लोटि बहुलवचनाद् द्विर्वचनाभावः। एतयोः शरणत्वं कवचत्वम्। मृत्पिण्डमुद्दिश्य व्याचष्टे— "शर्म च ह्यस्यैते वर्म चेति ॥ १० ॥

"संवसाथामिति §। 'समीची' समञ्चने, युवां कृष्णाजिनपुष्करपर्णे 'उरसा' हृदयेन विज्ञानेन, 'आत्मना' अवयवसंस्थानेन च 'संवसाथाम्' सम्च्छादयताम् 'एनं' मद्रूपम् अग्निम्। किमर्थम्? 'स्वर्विदा' स्वर्गलाभहेतो 'अजस्रम्' अनुपक्षीणम् 'इत्' एव 'ज्योतिष्मन्तम्' तेजस्विनम् 'अग्निम्', 'अन्तर्' युवयोर्मध्यप्रदेशे 'भरिष्यन्ती' धारयमाणे भवेतामिति शेषः ॥

द्वितीयमन्त्रस्योत्तरार्द्धं व्याचष्टे— "असौ वा आदित्य इति ॥ ११ ॥

---

* "अथैने अभिमृशतीति"—इति सायणभाष्यधृतपाठः।

† वा० सं० ११. ३०, ३१।

‡ अष्टा० ध्या० १३ पा०।

§ वा० सं० ११. ३१ क।  ‖ वा० सं० ११. ३२ ख।

अभिमर्शनमन्त्रगतां द्वित्वसङ्ख्यां यजमानाग्निरूपेण प्रशंसति— "द्वाभ्या मिति, व्याख्यातम् * ॥ १२ ॥ २ [४. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

(अथ द्वितीयं ब्राह्मणम्.)

अथ मृत्पिण्ड मभिमृशति । पुरीष्यो ऽसीति पशव्यो ऽसीत्येतद्विश्वम्भरा इत्येष हीदꣳ सर्व्वं बिभर्त्यथर्व्वा त्वा प्रथमो निरमन्थदग्न ऽइति प्राणो वा ऽअथर्वा प्राणो वा ऽएत मग्रे निरमन्थत्सो ऽसावग्रे ऽग्निरसृज्यत सो ऽसीति तदाह त मेवैन मेतत् करोति † ॥ १ ॥

अथैनं परिगृह्णाति ‡ । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतस्त्वा मग्ने पुष्कराद्ध्य-

---

* १५६ पृ० ३ पं० द्रष्टव्यमिति ।
† 'करोति'—इति ख । 'करोति'—इति ग ।
‡ 'परिगृह्णाति'—इति क, ङ ।

थर्व्वा निरमन्थतेत्यापो वै पुष्करं प्राणो ऽथर्व्वा प्राणो वा ऽएत मद्भ्योऽद्ध्यो निरमन्थन् मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्व्वस्य मूर्ध्न इत्येतत् * ॥ २ ॥

त मु त्वा दध्यङ्ङृषिः। पुत्र ईधे ऽअथर्व्वण इति वाग्वै दध्यङ्ङाथर्व्वणः स एनं तत ऐन्ध वृत्रहणं पुरन्दर मिति पाप्मा वै वृत्रः पाप्महनं पुरन्दर मित्येतत् † ॥ ३ ॥

त मु त्वा पाथ्यो वृषा। समीधे दस्यु-हन्तम मिति मनो वै पाथ्यो वृषा स एनं तत ऐन्ध धनञ्जयᳪ रणेरण ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः। प्राणो गायत्री प्राण मेवा-स्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, घ।
† 'मित्येतत्'—इति ग, घ।

थर्वा निरमन्थतेत्यापो वै पुष्करं प्राणो ऽथर्वा प्राणो वा ऽएत मग्रेऽग्नी निरमन्थन् मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्वस्य मूर्ध्न इत्येतत् * ॥ २ ॥

त मु त्वा दध्यङ्ङृषिः। पुत्र ईधे ऽअथर्वण इति वाग्वै दध्यङ्ङाथर्वणः स एनं तत ऐन्धे वृत्रहणं पुरन्दर मिति पाप्मा वै वृत्रः पाप्महनं पुरन्दर मित्येतत् † ॥ ३ ॥

त मु त्वा पाथ्यो वृषा। समीधे दस्युहन्तम मिति मनो वै पाथ्यो वृषा स एनं तत ऐन्ध धनञ्जयꣳ रणेरण ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः। प्राणो गायत्री प्राण मेवास्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, घ।

† 'मित्येतत्'—इति ग, घ।

अथैते त्रिष्टुभा ऽउत्तरे भवतः। आत्मा वै त्रिष्टुबात्मानमेवास्यैताभ्याᳬ संस्करोति सीद होतः स्व ऽउ लोके चिकित्वानित्ययमिवै होता तस्यैष स्वो लोको यत् कृष्णाजिनं चिकित्वानिति विद्वानित्येतत् सादया यज्ञᳬ सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवावीर्देवान् हविषा यजासीति देवः सन् देवानवन् हविषा यजासीत्येतदग्ने बृहद्यजमाने वयो धा इति यजमानायाशिष माशास्ते ॥ ६ ॥

नि होता होतृषदने विदान इति। अग्निर्वै होता कृष्णाजिनᳬ होतृषदनं विदान इति विद्वानित्येतत्त्वेषो दीदिवाᳬ२॥ ऽअसदत् सुदक्ष इति त्वेषो दीप्यमानो ऽसदत् सुदक्ष इत्येतददब्धव्रतप्रमतिर्वसिष्ठ इत्यदब्धव्रतप्रमतिर्ह्येष वसिष्ठः सहस्रम्भरः शुचिजिह्वो ऽअग्निरिति सर्वं वै सहस्रᳬ सर्वम्भरः शुचिजिह्वो ऽग्निरित्येतद् द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः ॥ ७ ॥

अथैषा बृहत्युत्तमा भवति। बृहती वा ऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः

सिच्यते तादृग् जायते तद्यदेता अत्र बृहतीं करोति तस्मादेष संचितो बृहतीमभिसम्पद्यते ॥ ८ ॥

सꣳसीदस्व महाँ२ऽअसीति । इदमेवैतद् रेतः सिक्तꣳ सꣳसादयति तस्माद्योनौ रेतः सिक्तꣳ सꣳसीदति शोचस्व देववीतम इति दीप्यस्व देववीतम इत्येतद्धि धूममग्ने ऽअरुषं मियेध्य सृज प्रशस्त दर्शतमिति यदा वा ऽएष समिध्यते ऽथैष धूममरुषं विसृजते दर्शतमिति दृश ऽइव ह्येषः* ॥ ९ ॥

ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति यद्वेव संवत्सरमभिसम्पद्यते तद् बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत् षट्-त्रिꣳशत् षट्त्रिꣳशदक्षरा बृहती तं दक्षिणत उदञ्चमाहरति दक्षिणतो वा† ऽउदग्योनौ रेतः

* 'ह्येषः'—इति ग, ह्येषः—इति घ ।
† 'वा'—इति क ।

तृतीया ऋचं विधत्ते— "त मु त्वा पाथ्य इति *। पाथो-ऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः'। "पाथोनदीभ्यां ड्यण्" †। वृषा। सर्वेन्द्रियानुग्राहकः। 'पाथ्यो वृषा'—इति मन उच्यते; "मनो वै पाथ्यो वृषा"—इति श्रुतौ ‡ व्याख्यानात्। 'दस्युहन्तमम्' अतृषा सातिशयेन हन्तारम्, 'रणे' सङ्ग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे'। तृतीयपादो विस्पष्टार्थत्वात् व्याख्यातुं नार्हतीत्याह— "यथैव यजुः, तथैव बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणा मृचां गायत्रीच्छन्दस्त्व मनूद्य प्रशंसति— "गायत्रीभिः प्राण इति। गायत्र्याः प्राणरूपत्वं सुगमम्। मन्त्रगतत्रित्वसङ्ख्यां प्राणोदानव्यानात्मना प्रशंसति— "तिसृभि-स्त्रयो वै प्राणा इति। एकैकस्या गायत्र्या त्रयः त्रयस्त्रयः पादाः। तासां नव प्राणान् सम्भूय नवप्राणात्मना प्रशंसति— "तासां नव पदानि, नव वै प्राणा इति। एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्यां मृदि प्राणानेव संहितवान् भव-तीत्यर्थः ॥ ५ ॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति— "अथैतत्त्रिष्टुभा ऽवसरे भवत इति। त्रिष्टुभ आत्म-रूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूप मेव संस्कृतवान् भवति ॥

---

* वा० सं० ११ ३४।

† पा० सू० ४ ४. ११।

‡ इहैव २११ पृ० ८ पं० द्रष्टव्यम्।

त्रिष्टुभौ विप्रदृष्टे — "सीद होतरिति *। हे 'होतः' देवानां साह्वातः! मद्रूपाग्ने! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद। 'चिकित्वान्' विद्वान्, अध्वरीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्टु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञ' 'सादय'। कृष्णाजिने विस्तीर्यमाणे ग्रीवा मध्यातः पिपर्ण सोमनिधानादिकञ्च भवतीति 'देवावीः'। "पवितृस्तृतन्त्रिभ्य ईः" †। देवान् त्वं सपर्यन् 'हविषा' 'अवन्' 'यजासि' यजतेः पञ्चमे लकारे रूपम्। हे 'अग्ने!' 'यजमाने' 'बृहत्' प्रभूतं 'वयः' धनं 'धाः' देहि ॥ ६ ॥

"निहोतेति ‡। मन्त्रं प्रतिपाद्य मनूच्य व्याचष्टे — "अग्निर्वै होतेति। निहोतेति 'नि'-इत्युपसर्गः 'असदद्'-इति क्रियया सम्बध्यते, निषीददिति। 'होता' आह्वाता योऽग्निः, 'होतृ-सदने' अग्नेः सदने कृष्णाजिने 'विदानः' कर्म जानन्, 'त्विषः' "त्विष दीप्तौ" §, दीप्यमानः, 'दीदिवान्', 'सुदक्षः' सुबलः, साधु क्षिप्रकारी वा 'अदब्धव्रतप्रमतिः' अनुपहतकर्मविषय-प्रकृष्टमतिः, 'वसिष्ठः' वसुमत्तरः, 'सहस्रम्भरः' सर्वस्य भर्त्ता, यद्वा "हृग्रहोर्भः" ‖। सहस्रधा विक्रियमाणः। तथा चेतासाम्रेयक (?) ब्राह्मणम् — "एष ह वा अस्य सहस्रं भरता यदेष नैकं सन्तं बहुधा विहरन्ति"-इति।

---

* वा॰ सं॰ ११. ३५।
† उ॰ ७ पा॰ १५८ सू॰।
‡ वा॰ सं॰ ११. ३५।
§ भ्वा॰ उ॰ १००२ धा॰।
‖ पा॰ ८. २. ३२ सू॰ १ वा॰।

सिच्यत ऽएषो ऽअस्यैतर्हि योनिरविच्छेद माहरति रेतसोऽविच्छेदाय ॥ १० ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. २.] ॥

कात्यायनः— "पिण्डं पुरीष्योऽसीति, पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वा मग्न इति षड्भिः सर्वां मृदं हृत्वा, पुष्करपर्णे निदधाति"–इति *। "त्वा मग्ने"–इत्यादिभिः षड्भिः ऋग्भिः† यावदपेक्षितां मृदं 'सर्वां' 'सकृत्' एकवारमेव गृहीत्वा 'पुष्करपर्णे' निदध्यादिति। तदिदं द्वितीयम्। प्रथमतो 'मृत्पिण्डं' "पुरीष्योऽसि"–इति मन्त्रेण‡ आलभते, 'अथ' दक्षिणोत्तराभ्यां 'पाणिभ्याम्' 'एनं' 'परिगृह्णाति'। तत्र 'दक्षिणः' हस्तः 'साभ्रिः' अभ्रिसहितः, वामस्तु केवलः। अथ तद् ब्राह्मणेन विधीयते— "अथ मृत्पिण्डमिति।

मृत्पिण्डाभिमर्शनमन्त्रस्याऽस्य अर्थः।— हे 'अग्ने!' त्वम् 'पुरीष्यः' पशुहितः 'असि', 'विश्वभराः' भूलोकस्य सर्वस्य धारकश्च; चीयमानाग्नेर्विराड्रूपत्वात्। 'अथर्वा' अरणवान्, प्राणः 'प्रथमः' पूर्वः त्वा 'निरमन्थत्' निर्मथितवान्। पुरीष्योऽसीति सिद्धस्यकथनेन यदुक्तम्, तदुपपादयति—"पशव्योऽसीति"। "प्राणो वा अथर्वा"–इत्यर्थवादोऽस्य सिद्धवदर्थकथनम्। "तद्

---

* का० श्रौ० सू० १६ २ २६, २७, ३. १।

† वा० सं० ११. ३२ २—७।

‡ वा० सं० ११. ३२, १।

योऽसौ अग्रेऽग्निरसृज्यत, सोऽसीतीति। पूर्वं योऽग्निः सृष्टः, स एवैतं पुरीष्योऽसीत्यनेनोक्तवान् भवतीत्यर्थः ॥ १ ॥

"अथैन मिति। 'परिगृह्णाति' मृत्पिण्डं धारयन् प्राङ्मुखस्याध्वर्योः 'दक्षिणतः' प्रदेशे वर्त्तमानः, दक्षिणो हस्तः साभ्रिः, उत्तरतः केवलः, ताभ्यां पाणिभ्यां धारयेत्।

ग्रहणमन्त्रान् विधत्ते— "त्वा मग्ने पुष्करादधि"-इत्यारभ्य *, "ताः षट् सम्पद्यन्ते"-इत्यतः † प्राक्तनेन। तत्राद्यास्तिस्रो गायत्र्यः, त्रिष्टुभौ द्वे, षष्ठी बृहती।

"त्वा मग्ने"-इत्यस्याय मर्थः। हे 'अग्ने।' 'त्वाम्' 'अथर्वा' अरणशीलः प्राणः, 'पुष्करात्' उदकात्, 'अधि'-शब्दः पञ्चम्यर्थानुवादी, 'निरमन्थत'। अग्निं विशिनष्टि— "विश्वस्य वाघत इतीति। 'मूर्द्ध्नः' मूर्द्धानम्। कर्म्मणि षष्ठी॥

पुष्करायर्वपदयोरर्थं माह— "आपो वै पुष्करं प्राणोऽथर्वेति ॥ २ ॥

द्वितीयां मन्त्रं विधत्ते— "त मु त्वा दध्यङ्ङिति ‡। 'अथर्वणः पुत्रः' 'दध्यङ्' नाम ऋषिः 'वृत्रहणं' वृत्रस्य पाप्मनः हन्तारम्, 'पुरन्दरं' असुरपुराणां दारयितारं 'त्वाम्' एव 'ईधे' दीपयति। "ञि इन्धी दीप्तौ" §, लिटि "इन्धिभवतिभ्याञ्च"-इति ‖ कित्वान्नलोपः। "दध्यङ्ङाथर्वण इति। सम्प्रत्ययनात् वाक्त्वेन श्रुतिः ॥ ३ ॥

---

* वा० सं० ११. ३२. २।
† २१३ पृ० १० पंक्तिर्द्रष्टव्या।
‡ वा० सं० ११. ३३।
§ ध० धा० १० धा०।
‖ पा० सू० १. २. ६।

तृतीयामृचं विधत्ते— "तमु त्वा पाथ्य इति*। पाथोऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः'। "पाथोनदीभ्यां ड्यण्"†। बलम्। सर्वेन्द्रियानुग्राहकः। 'पाथ्यो वृषा'—इति मन उच्यते; "मनो वै पाथ्यो वृषा"—इति श्रुतौ‡ व्याख्यानात्। 'दस्युहन्तमम्' शत्रूणामतिशयेन हन्तारम्, 'रणे' सङ्ग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे'। तृतीयपादो विस्पष्टार्थत्वात् व्याख्यातुं नार्हतीत्याह— "यथैव यजुः, तथैव बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणामृचां गायत्रीच्छन्दस्कत्वमनूद्य प्रशंसति— "गायत्रीभिः प्राण इति। गायत्र्याः प्राणरूपत्वं श्रुतम्। मन्त्रगतत्रित्वसङ्ख्यां प्राणोदानव्यानात्मना प्रशंसति— "तिसृभिस्त्रयो वै प्राणा इति। एकैकस्या गायत्र्या ऋचः त्रयस्त्रयः पादाः। तासां नव पादान् सम्भूय नवप्राणात्मना प्रशंसति— "तासां नव पदानि, नव वै प्राणा इति। एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्य हृदि प्राणानेव संहितवान् भवतीत्यर्थः ॥ ५ ॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति— "अथैतत्त्रिष्टुभा ऽउत्तरे भवत इति। त्रिष्टुभ आत्मरूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूपमेव संस्कृतवान् भवति ॥

---

* वा० सं० ११. ३४।

† पा० सू० ४ ४ ११।

‡ इहैव २११ पृ० ८ पं० द्रष्टव्यम्।

त्रिष्टुभौ विधत्ते— "सीद होतरिति *। हे 'होतः' देवानां साह्वानः! मद्रूपाग्ने! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद। 'चिकित्वान्' विद्वान्, मस्मदीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्टु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञं' 'सादय'। कृष्णाजिने विस्तीर्यमाणे प्रोक्षा मवघातः पेषणं सोमनिधानादिकञ्च भवतीति 'देवावीः'। "अवितृस्तृतन्त्रिभ्य ईः" †। देवान् त्वं सपर्यन् 'हविषा' 'यजम्' 'यजासि' यजतेः पञ्चमे लकारे रूपम्। हे 'अग्ने!' 'यजमाने' 'बृहत्' प्रभूतं 'वयः' धनं 'धाः' देहि ॥ ६ ॥

"नि होतेति ‡। मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "अग्नि-र्वै होतेति। नि होतेति 'नि'–इत्युपसर्गः 'असदद्'–इति क्रियया सम्बध्यते, निषीदति। 'होता' आह्वाता योऽग्निः, 'होतृ-षदने' अग्नेः सदने कृष्णाजिने 'विदानः' कर्म जानन्, 'त्वेषः' "त्विष दीप्तौ" §, दीप्यमानः, 'दीदिवान्', 'सुदक्षः' सुबलः, साधु क्षिप्रकारी वा 'अदब्धव्रतप्रमतिः' अनुपहतकर्मविषय-प्रकृष्टमतिः, 'वसिष्ठः' वसुमत्तरः, 'सहस्रम्भरः' सर्वस्य भर्त्ता, यद्वा "हृग्रहोर्भः" ‖ सहस्रधा विह्रियमाणः। तथा चैतातामश्रेयक (?) ब्राह्मणम्— "एष ह वा अस्य सहस्रं भरता यदेन मेकं सन्तं बहुधा विहरन्ति"–इति।

---

* वा० सं० ११. ३५।
† उ० २ पा० १५८ सू०।
‡ वा० सं ११. ३५।
§ भ्वा० उ० १००१ धा०।
‖ पा० ८. २. ३२ सू० १ वा०।

अनयोर्ऋचोर्द्वित्वसङ्ख्याऽऽग्नेयत्रिष्टुप्प्रस्तावकं ब्राह्मणं प्रति-दिशति— "तस्योक्तो बन्धुरिति । "आ त्वा जिघर्मीत्येताभ्यां व्यतिषक्ताभ्यां साहुतिदयं कार्यमित्यस्य प्रकरणे "द्विपाद् यजमान इत्यादिना * ॥ ७ ॥

षष्ठीं ऋचं विधातुं तद्गतं बृहतीच्छन्दः प्रशंसति— "अथैषा बृहतीति । 'एषा' वक्ष्यमाणा । "बृहतीं वा एष इति । 'सञ्चितः अग्निः बृहतीम् अभिसम्पद्यते' सम्पत्त्यक्षरसङ्ख्याको भवति ; 'अथाप्युत्तरत्र बृहतीसम्पत्तिराम्नास्यते † । सामान्येनायं सम्पत्तिप्रकारः ;— संवत्सररूपोऽग्निरिति प्रागुक्तम् ‡, तत्र संवत्सरे द्वादश पौर्णमास्यः, द्वादश कृष्णाष्टम्यः, द्वादशामावास्याः, ताः षट्त्रिंशत् संवत्सरे धार्यमाणेऽग्नौ सम्पद्यन्ते, बृहत्यपि षट्त्रिंशदक्षरेति तत्साम्यम् ।

एवन्तर्हि अग्निचयनकर्मान्ते सम्पत्तिर्वक्तव्येति चेत्, तत्राह— "यादृग्वै योनाविति । 'योनौ यादृग् रेतः सिच्यते', 'तादृग्' एवोत्तरं 'जायते' । अत इदानीं बीजभूतमद्रूपाग्नेः बृहत्या धारणे बृहत्यात्मकत्व मेव तस्य सम्पादितवान् भवति ॥ ८ ॥

तामृचं विधत्ते— "संसीदस्व महानिति । हे 'अग्ने ।' मद्रूप ! 'संसीदस्व' सम्यग् बीजात्मनावतिष्ठस्व, यतो 'महान्' त्वम् 'असि' । 'देववीतमः' अतिशयेन हविषा देवानां तर्पयितृतमः, त्वं 'शोचस्व' दीप्यस्व । हे 'मियेध्य' मेधो यज्ञ-

---

* पुरस्तात् ( ३ ए० १ ब्रा० १८—२१ क० ) द्रष्टव्यम् ।

† अनुपदमेव दशमकण्डिकायां ( २१९, २१८ पृ० ) द्रष्टव्यम् ।

‡ वा० सं० ११. ३७ ।

ष्तदर्हतीति हे 'प्रशस्त' प्रकर्षेण स्तुत ! अग्ने ! 'दर्शतम्' दर्शनीयम्, 'अरुषम्' आरोचमानं धूमं 'विसृज' ॥

मन्त्रं व्याचष्टे— "इद मेवैतदिति । उत्पत्स्यमानाग्ने रेतोरूपत्वात् मृत्पिण्डस्य बाहुभ्यां धारणं नाम; योनौ सिक्तस्य रेतसः संसादन मित्यर्थः । 'धूमं विसृज'–इति यदुक्तम्, तदुपपादयति— "यदा वा एष समिध्यत इति ॥ ८ ॥

परिग्रहणे विनियुक्तानां मन्त्राणां सङ्ख्यां सम्भूय संवत्सरात्मना प्रशंसति— "ताः षट् सम्पद्यन्त इति । प्रकारान्तरेण स्तोतु मनुवदति— "षडेव संवत्सर मिति । संवत्सरे तावद् द्वादश पौर्णमास्यः, द्वादशाष्टकाः, द्वादशामावास्याः; षट्त्रिंशत्सङ्ख्या सम्पद्यते, बृहत्या अपि षट्त्रिंशदक्षरत्वात् संवत्सरसम्मितोऽग्निः बृहत्यात्मना सम्पद्यत इत्यर्थः ।

विधत्ते— "तं दक्षिणत उदञ्च मिति । 'तं' मृत्पिण्डं 'दक्षिणतः' प्रदेशात् 'उदञ्चं' उदङ्मुखम् आहरेत् । तत् प्रशंसति— "दक्षिणतो वा इति । यतो लोके दक्षिणतः स्थितेन पुरुषेण, वामविभागे स्थितया स्त्रिया "योनौ रेतः सिच्यते'; 'एतर्हि' इदानीं मथ्यमानस्याग्नेः एषः मृत्पिण्डो 'योनिः' 'अविच्छेदं' विच्छेदराहित्येन मृत्पिण्डाहरणं कर्त्तव्यम्; 'रेतसः' रेतोभूतस्याग्नेः 'अविच्छेदाय' इति ॥ १० ॥ २ [ ४. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

( अथ तृतीयं ब्राह्मणम् . )

अथ तत्राप उपनिनयति । यद्वा ऽअस्यै क्षतं यद्विलिष्टं मद्भिर्वै तत् सन्धीयते ऽद्भिरेवास्या ऽएतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ १ ॥

अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य इति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य इत्येतत्तासा मास्थानादुज्जिहता मोषधयः सुपिप्पला इत्यर्थं या ऽआस्थानादुज्जिहत ऽओषधयः सुपिप्पलाः * ॥ २ ॥

अथैनां व्वायुना सन्दधाति । यद्वा ऽअस्यै क्षतं यद्विलिष्टं व्वायुना वै तत् सन्धीयते व्वायुनैवास्या एतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ ३ ॥

सन्ते व्वायुर्मातरिश्वा दधात्विति । अयं वै व्वायुर्मातरिश्वा योऽयं पवत ऽउत्तानाया हृदयं यद्विकस्त मित्युत्तानाया ह्यस्या एतद्धृदयं व्विकस्तं यो देवानां चरसि प्राणथेनेत्येष हि सर्व्वेषां देवानां चरति प्राणथेन कस्मै देव व्वषडस्तु तुभ्य

* 'सुपिप्पला,'—इति ग, घ।

सर्वं स्थलम् 'अद्भिः' 'सन्धीयते' जलसन्धाने हि विषमं स्थलं समं भवति । तस्मादापः कुण्डे निधेयाः ॥ १ ॥

मन्त्रं विधत्ते— "अपो देवीरिति * । अत्राग्निः सन्धीयते । 'प्रजाभ्यः' प्रजानाम् 'अयक्ष्माय' यक्ष्माव्याधिः तदभावाय, 'मधुमतीः' रसवतीः 'देवीः' द्योतमानाः 'अपः' 'उदसृजत्' आसिञ्चत । आसां भूमिगतानां अपाम् 'आस्थानात्' उदकसंसृष्टभूप्रदेशात् 'सुपिप्पलाः' पिप्पलं पक्वं फलम्, सुफलाः, 'ओषधयः' फलपाकान्ताः शस्यादयः 'उज्जिहत' उद्गच्छन्तु, रोहन्तु । "ओ हाङ् गतौ" † ।

'अयक्ष्माय'-इति पदं भावत्वेन व्याचष्टे— "अयक्ष्मत्वायेति ॥ २ ॥

अथ सूत्रम्— "सन्त इति वायुमवक्षिपतीति ‡ । "सन्ते-वायुर्मातरिश्वा"-इति मन्त्रेण § वायुं अवक्षिपेत्, मन्त्रपाठेना-घटे वायुं पूरयेत् । तदिदं विधत्ते— "अथैनां वायुना सन्दधातीति । 'एनां' खननभूमिम् । इदानीं सुप्तः (?) यद्वा अच्छे चत मिति । यथा लोके गर्तं खातं निम्नस्थलं वायुना सन्धीयते । वायुसञ्चालितैः पर्णादिकण्टकादिकं पूर्यते, एवमत्रापीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते— "सन्ते वायुरिति । पूर्वोऽर्द्धर्चः, पृथिवीदेवत्यः, उत्तरो वायव्यः । 'उत्तानायाः' ऊर्ध्वमुखतया विस्तृ-

सायाः 'ते' तव पृथिव्याः 'यत्' 'हृदयं' 'विकस्तम्' अवट-कारणेन खातम्, तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति पवते इति 'मातरिश्वा' वायुः, 'सन्दधातु' सम्पूरयतु। तदर्थं वायुं सम्बोध्योच्यते। 'यः' च त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि'। वायौ सति वागादीन्द्रियाणि चेष्टन्ते। हे 'देव' द्योतमान वायो! 'कस्मै' कः प्रजापतिः, तद्रूपाय 'तुभ्यं' 'वषट्' अस्तु। इयं पृथिवी वषड्भूता भवतु। 'क'-पदस्यार्थं माह— "प्रजापतिर्वै कः"-इति। वषट्कारणेनाहुतिः कार्येति ज्ञात्वा प्रशंसति— "नो हैता-वत्यन्याहुतिरिति। 'यथा' 'एषा' आहुतिः सन्धानकारी, एव मन्या नास्तीत्यर्थः॥ ४॥

कात्यायनः— "अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"-इति *। अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिशः सकाशात् 'पांसु' अवटे संवपेत्। एवं प्रत्यगा-दिभ्यः सकाशात् तद् विधत्ते— "अथैनां दिग्भिः सन्दधा-तीति। तत्र क्रमं विधत्ते— "स इमां चेमां च दिशौ सन्द-धातीति। 'इमा मिमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते। एतयोर्विवक्षायां कारण माह— 'एते दिशौ' 'सं-हिते'। इम मिति लोकप्रसिद्धे प्राक्प्रतीच्याविति युज्येते, पुनः इमाञ्च'-इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते। अत्रापि संहितत्व मेव कारणम्। अथ चतुर्दिशं सन्धानप्रकार मभि-नयेन दर्शयति— "इत्यथेत्थेति। 'इति' एवम् 'अथे' प्रथमं प्राचीं दिश मित्यर्थः। इतरदिक्क्रियापेक्षया 'अथेति'-पदत्रयम्।

* का० श्रौ० सू० १६ ३ ४।

सर्वं खननम् 'अद्भिः' 'सन्धीयते' जलसन्धाने हि विषमं स्थलं समं भवति । तस्मादापः कुण्डे निषेयाः ॥ १ ॥

मन्त्रं विधत्ते—"आपो देवीरिति * । अत्राग्निः सन्धीयते । 'प्रजाभ्यः' प्रजानाम् 'अयक्ष्माय' यक्ष्मव्याधिः तदभावाय, 'मधुमतीः' रसवतीः 'देवीः' द्योतमानाः 'आपः' 'उदसृजन्' आसिञ्चत । आसां भूमिगतानां अपाम् 'आस्थानात्' उदकसंसृष्टभूदेशात् 'सुपिप्पलाः' पिप्पलं पक्वं फलम्, सुफलाः, 'ओषधयः' फलपाकान्ताः शस्यादयः 'उज्जिहत' उद्गच्छन्तु, रोहन्तु । "ओ हाङ् गतौ" † ।

'अयक्ष्माय'-इति पदं भावत्वेन व्याचष्टे— "अयक्ष्मतायेति ॥ २ ॥

अत्र सूत्रम्— "सप्त इति वा न मथयतीति ‡ । "सञ्ते वायुर्मातरिश्वा"-इति मन्त्रेण § वायु मवश्रयेत्, मन्त्रपाठेनावटे वायुं पूरयेत् । तदिदं विधत्ते— "अथैनां वायुना सन्दधातीति । 'एनां' खननभूमिम् । इदानीं सुप्तः (?) यदा पश्चे अत मिति । यथा लोके सर्वं गर्तं निम्नस्थलं वायुना सन्धीयते । वायुसञ्चालितैः पर्णादि काष्ठकादिकं पूर्यते, एवमत्रापीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते— "सञ्ते वायुरिति । पूर्वोऽर्द्धर्चः, पृथिवीदैवत्यः, उत्तरो वायव्यः । 'उत्तानायाः' ऊर्ध्वमुखतया विस्तृ-

* वा॰ सं॰ ११. ३८. १ ।
† जु॰ आ॰ ६ धा॰ ।
‡ का॰ श्रौ॰ सू॰ १६. ३. ३ ।
§ वा॰ सं॰ ११. ३९ ।

स्थायाः 'ते' तव पृथिव्याः 'यत्' 'हृदयं' 'विकस्तम्' अवटकरणेन खातम्, तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति गच्छति इति 'मातरिश्वा' वायुः, 'सन्दधातु' सम्पूरयतु। उत्तरार्द्धं वायुं सम्बोधयति। 'यः' च त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि'। वायौ सति वागादीन्द्रियाणि चेष्टन्ते। हे 'देव' द्योतमान वायो! 'कस्मै' कः प्रजापतिः, तद्रूपाय 'तुभ्यं' 'वषट् अस्तु'। इयं पृथिवी वषड्भूता भवतु। 'क'-पदस्यार्थं आह— "प्रजापतिर्वै कः"–इति। वषट्करणेनाहुतिः कार्येति मत्वा प्रशंसति— "सो ह्येता-सत्यन्याहुतिरिति। 'यया' 'एषा' आहुतिः सन्धानकरी, एवमन्या नास्तीत्यर्थः ॥ ४ ॥

कात्यायनः— "अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"–इति *। अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिशः सकाशात् 'पांसु' अवटे संवपेत्। एवं प्रत्यगादिभ्यः सकाशात् तद् विधत्ते— "अथेमां दिग्भिः सन्दधातीति। तत्र क्रमं विधत्ते— "स इमां चेमां च दिशौ सन्दधातीति। 'इमां मिमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते। एतयोर्विवक्षायां कारणमाह— 'एते दिशौ' 'संहिते'। इमामिति लोकप्रसिद्धे प्राक्प्रतीच्याविति युज्येते, पुनः 'इमाञ्च'–इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते। अत्रापि संहितत्वमेव कारणम्। अथ चतुर्दिशं सन्धानप्रकार मभिनयेन दर्शयति— "इत्यग्रेऽथेति। 'इति' एवम् 'अग्रे' प्रथमं प्राचीं दिशमित्यर्थः। इतरदिक्क्रियापेक्षया 'अथेति'-पदद्वयम्।

---

* का० श्रौ० सू० १६ २ ४।

पूर्वं मन्त्ररामभाजान् पशून् प्रमुत्य, तं मौञ्जीभिरभिधानी-भिरभिहिता भवन्तीत्यादिना, विहितो भवन्तीत्यनेन च रशना-विधानमुक्तम् *, अथ योक्त्रस्य समन्तं वेष्टनं विधत्ते— "तत् पर्यस्यति वास इति †। 'तत्' योक्त्रं 'पर्यस्यति' परिवेष्टयति। हे 'विभावसो' दीप्तिभिर्वासयितः!, दीप्तिधन! वा, हे 'अग्ने!' 'चित्ररूप' विचित्ररूपं 'वासः' 'संव्ययस्व'। "व्येञ् संवरणे" ‡, परिधत्स्व। योक्त्रमग्नेर्वासः संव्ययस्वेति वस्त्र-परिधापनोक्तेस्तात्पर्यं माह— "वरुण्या वै यज्ञ इति। 'यज्ञो' हि रज्जुः: 'वरुण्या' वरुणदेवत्या भवति §। यथा— योक्त्रपरित्यागे "प्रत्वा मुञ्चामि वरुणस्य पाशात्"-इति ‖ मन्त्रः, नेवम्; इह तु 'एतद्' योक्त्रम् 'अवरुण्यं कृत्वा' 'यथा वासः परिधापयेत्' 'एवं' तद्दित्यभिप्रायेण "वासः •—• संव्ययस्वेत्युक्तम् ¶। पाशस्यैव हि वरुणी देवता, न वाससः इत्यर्थः ॥ ८ ॥

विधत्ते— "अथैन मादायोत्तिष्ठतीति **। 'एनं' मृत्पिण्ड मादाय उत्तिष्ठेत्। तत् प्रशंसति— "असौ वा आदित्य इति। "त्रेधात्मानं विकरोति,— अग्निं तृतीयं, वायुं तृतीयम्, आदित्यं तृतीयम्"-इति श्रुतेः ††। मृत्पिण्डोऽग्निरिति बोध्यम्। सद-मादायोत्थानेन अमु मादित्य मेवोत्थापितवान् भवतीति ॥

---

* २ प्र० ६ आ० २६, २७ क० (१९८ पृ०) द्रष्टव्यम्।

† का० श्रौ० सू० १६. २ ६ ख।

‡ भ्वा० उ० १००७ धा०।

§ १ भा० २ प्र० ४ आ० १५ कण्डीको द्रष्टव्यम्।

‖ ऋ० सं० ८ अष्ट० ६ अ० २४ व० द्रष्टव्यम्।

¶ वा० सं० ११ ४० २।

** का० श्रौ० सू० १६ ३. ७। †† तै० आ० १. ७, १. २।

मन्त्रं विधत्ते—"उदु तिष्ठ स्वध्वरेतीति *। हे 'स्वध्वर' सुयज्ञ ! 'उत्तिष्ठ'। 'उ'-शब्दोऽप्यर्थः। अपि च 'देव्या' देवसम्बन्धिन्या 'धिया' बुद्ध्या 'नः' अस्मान् 'अव' पालय। 'दृशे' दर्शनाय 'महता भासा' प्रौढेन तेजसा 'सुशुक्वनिः' अत्यन्तं दीप्यमानः 'सुशस्तिभिः' शोभनशिक्षितैः 'वोढृभिः' अश्वैः 'आयाहि' आगच्छ 'अग्ने' सद्रूपः इति। सुशस्तिभिरितिपदस्यार्थ माह—"ये वोढारस्ते सुशस्तय इति ॥ ८ ॥

अत्र सूत्रम्,—"ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णाति, ऊर्ध्व ऊ षु ण इति, अवहृत्योपरि नाभिधारयन्निति †। तदूर्ध्वधारणं विधत्ते—"अथैन मित ऊर्द्ध मिति। 'इतः' भूमेः सकाशात् 'ऊर्द्धं' प्राङ्मुखं प्रगृह्णीयात्। "असौ वा आदित्य इत्यादि पूर्ववद् व्याख्येयम् ‡।

मन्त्रं विधत्ते—"इत ऊर्द्ध मिति। 'न' अस्माकम् 'ऊतये' तर्पणाय सुष्ठु 'ऊर्द्धः' 'तिष्ठ'। तत्रोपमा माह—"देव इति। 'न'-शब्द उपमार्थः। यथा सविता देवः 'वाजस्य' अन्नस्य 'सनिता' सम्भक्ता 'ऊर्द्ध' तिष्ठति। 'यद्' यस्मात् 'अञ्जिभिः' अभिव्यञ्जकैः 'वाघद्भिः' रश्मिभिः उपलक्षितं त्वा 'विह्वयामहे' बहुविध माह्वयामः।

अत्र मन्त्रे § पूर्वार्द्धं निगदव्याख्यात मिति दर्शयति—"यथैव यजुः, तथा बन्धुरिति। उत्तरार्द्धं 'वाजस्य'-इत्यादे·

---

* वा० सं० ११. ४१।
† का० श्रौ० सू० १६ ३. ८, ९क।
‡ पूर्वत्र (२२० पृ० १४ पं०) द्रष्टव्यम्।
§ वा० सं० ११. ४२।

दयं गृह्य— "ऊर्ध्वो वा एष तिष्ठत्वित्यादिना। पूर्वं मित्र खर्ण मिति सामान्येनोक्तम्, तद् विशिनष्टि— "परोबाहु प्रगृह्णातीति। बाहोः परस्तात् परोबाहु, बाहू तिर्यगुद्गृह्णीत।

अविपिण्डस्याधो नयनं विधत्ते— "अथैनमुपावहरतीति। उपावहरणस्य अवधिं दर्शयति— "न उपावहरत्येति। उपरि-नाभिधारणस्य प्रशंसकं ब्राह्मणं निदर्शयति— "तस्योपरि बन्धुरिति। ऊर्ध्वधारणप्रस्तावे "यदेवोपरि नाभि यदाप् वै नाभि रेतः प्रजातिरिति * •—• एतद्वै पशोर्मेध्यतरं यदुपरि-नाभि"—इति † ॥ १० ॥ ४ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम् . )

हस्त ऽएष भवत्यथ पशूनभिमन्त्रयते। एतद्वा ऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यं समदधुस्तथैवैष्वयमेतत् सम्भरिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सो ऽश्वमभिमन्त्रयते। स जातो गर्भो ऽअसि

---

*, † उपरिष्टात् ( ५ प्र० १ ब्रा० ९,१० क० ) द्रष्टव्यम्।

रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽग्ने चारुर्विभृत ओषधीष्विति सर्व्वासु ह्येष चारुर्विभृत ओषधिषु चित्रः शिशुः परि तमाᳩस्यक्तूनिति चित्रो वा ऽएष शिशुः परि तमाᳩस्यक्तून्विरोचते प्र मातृभ्यो ऽअधि कनिक्रदद्गा इत्योषधयो वा ऽएतस्य मातरस्ताभ्य एष कनिक्रदत्प्रैति तदश्वे वीर्यं दधाति * ॥ २ ॥

अथ रासभᳩ। स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्व्वन्निति स्थिरश्च भव वीड्वङ्गश्चाशुश्च भव वाजी चार्व्वन्नित्येतत् पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण इति पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन इत्येतत्तद्रासभे वीर्यं दधाति ॥ ३ ॥

अथाजᳩ। शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इत्यङ्गिरा वा ऽअग्निराग्नेयोऽजः शमयत्येवैनमेतदहिᳩसायै मा द्यावापृथिवी ऽअभिशोचीर्मान्तरिक्षं मा वनस्पतीनित्येतत् सर्व्वं मा हिᳩसीरित्येतत्तदजे वीर्यं दधाति ॥ ४ ॥

* 'दधाति'—[illegible] ३ ।

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वीर्यं दधाति ॥ ५ ॥

अथैनमेतेषां पशूनामुपरिष्टात् प्रगृह्णाति । तदेनमेतैः पशुभिः सम्भरति नोपस्पृशति वज्रो वै पशवो रेत इदं नेदिदꣳ रेतो वज्रेण हिनसानीत्यथो ऽअग्निरयं पशव इमे नेदयमग्निरिमान् पशून् हिनसदिति ॥ ६ ॥

तमश्वस्योपरिष्टात् प्रगृह्णाति । प्रैतु वाजी कनिक्रददिति प्रैतु वाजी कनिक्रदमान इत्येतन्नानदद्रासभः पत्वेति तदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधाति भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरेति भरन्नग्निं पशव्यं मो ऽअस्मात् कर्मणः पुरा पादीत्येतत्तदेनमश्वेन सम्भरति ॥ ७ ॥

अथ रासभस्य । वृषाग्निं वृषणं भरन्निति वृषा वा ऽअग्निर्वृषा रासभः स वृषा वृषाणं भरत्यपां गर्भꣳ समुद्रियमित्यपाꣳ ह्येष गर्भः समुद्रियस्तदेनꣳ रासभेन सम्भरति ॥ ८ ॥

अथापादत्ते * । अग्न ऽआयाहि वीतय ऽइत्यवितव ऽइत्येतत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राह्मणादपादत्ते † ॥ ९ ॥

अथाजस्य । ऋतꣳ सत्यमृतꣳ सत्य मित्ययं वा ऽअग्निर्ऋत मसावादित्यः सत्यं यदि वासावृतमयꣳ सत्य मुभयम्वेतदय मग्निस्तस्मादाह ऽर्तꣳ सत्यमृतꣳ सत्य मिति तदेन मनेन सम्भरति ॥ १० ॥

त्रिभिः सम्भरति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् सम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् तस्योक्तो बन्धुः ॥ ११ ॥

अथैतान् पशूनावर्त्तयन्ति । तेषा मजः प्रथम एत्यथ रासभो ऽथाश्वो ऽथैतो यता मश्वः प्रथम एत्यथ रासभो ऽथाजः क्षत्रं वा ऽअश्वो वैश्यं च शूद्रं चानु रासभो ब्राह्मण मजः ‡ ॥ १२ ॥

तद्यदितो यताम् § । अश्वः प्रथम एति तस्मात्

---

* 'अथापादत्ते'—इति क, ख ।

† '॰दथादत्ते'—इति ग, घ ।

‡ 'मजाः'—इति ग, घ ।

§ 'यनाम्'—इति ग, घ ।

क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनु-
यन्त्यथ यदसुरा आयता अजः प्रथम एति तस्माद्
ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनु-
यन्त्यथ यन्नैवैतो यन्तो नामुतो रासभः प्रथम
एति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च वैश्यं
च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्य-
सायाथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ वर्णा-
वभितः परिगृह्णीते ऽनपक्रमिणौ कुरुते * ॥ १३ ॥

अथानडुहमीक्षते । अग्निं पुरीष्य मङ्गि-
रस्वद्भराम इत्यग्निं पशव्य मग्निवद्भराम इत्येतत्त-
देन मनसापुरुषेण सम्भरति ॥ १४ ॥

तमजस्योपरिष्टात् प्रगृह्णाति । आग्नेयो
वा ऽअजः स्वेनैवैन मेतदात्मना स्वया देवतया
सम्भरत्यथो ब्रह्म वा ऽअजो ब्रह्मणैवैन मेतत्
सम्भरति ॥ १५ ॥

अथैन मुपावहरति । ओषधयः प्रतिमोदध्व
मग्नि मेतᳪ शिव मायन्त मभ्यत्र युष्मा इत्येतदेत-

* 'करोति'—इति क, ख।

स्मादायत ओषधयो बिभ्यति यद्वै नोऽयं न हिꣳ-
स्यादिति ताभ्य एवैन मेतच्छमयति प्रत्येनं मोद-
ध्वꣳ शिवो वो ऽभ्येति न वो हिꣳसिष्यतीति
व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो ऽअप
दुर्म्मतिं जहीति व्यस्यन्विश्वा अनिराश्चामीवाश्च
निषीदन्नो ऽप सर्व्वं पाप्मानं जहीत्येतत् * ॥ १६ ॥

ओषधयः प्रतिगृह्णीत । पुष्पवतीः सुपिप्पला
इत्येतद्वैतासाꣳ समृद्धꣳ रूपं यत् पुष्पवत्यः सुपि-
प्पलाः समृद्धा एनं प्रतिगृह्णीतेत्येतदयं वो गर्भ
ऋत्वियः प्रत्नꣳ सधस्थ मासददित्ययं वो गर्भ ऋत-
व्यः सनातनꣳ सधस्थ मासददित्येतत् † ॥ १७ ॥

द्वाभ्या मुपावहरति । द्विपाद्यजमानो यजमानो
ऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैन मेतदुपा-
वहरति तं दक्षिणत उदञ्च मुपावहरति तस्योक्तो
बन्धुरुद्धत मवोक्षितं भवति यच्चैन मुपावहरत्युद्धते वा
ऽअवोक्षितेऽग्नि मादधति सिकता उपकीर्णा भवन्ति
तासा मुपरि बन्धुः ॥ १८ ॥

---

* 'जहीत्येतत्'—इति ग, घ ।

† 'सधस्थ मासददित्येतत्'—इति ग, घ ।

परिश्रितं भवति । एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्य्यश्रयंस्तथैवास्मा ऽअय मेतां पुरं परि-श्रयत्यथो योनिर्व्वा ऽइयꣳ रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरेव मेतत् क्रियते तस्मादपि स्वया जायया तिर इवैव चिच-रिषति * ॥ १९ ॥

अथैनं विष्यति । तद्यद्देवात्मोपनह्य सꣳ-शुच्यति ता मेवास्मादेतच्छुचं बहिर्धा दधात्यथो ऽएतस्या एवैन मेतद्योनेः प्रजनयति ॥ २० ॥

वि पाजसा पृथुना शोशुचान इति । वि पाजसा पृथुना दीप्यमान इत्येतद्बाधस्व द्विषो रक्षसो ऽअमीवा इति बाधस्व सर्व्वान् पाप्मन इत्ये-तत् सुशर्म्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुह-वस्य प्रणीतावित्याशिष माशास्ते † ॥ २१ ॥

अथालोमान्याच्छिद्य ‡ । उदीचः प्राचः

---

* 'चिचरिष्यति'—इति क ।

† 'माशास्ते'—इति क, ख ।

‡ 'अथापलोमान्याच्छिद्य'—इति क, ग, घ ।

पशून् प्रसृजत्येषा ह्युभयेषां देवमनुष्याणां दिग्य-दुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥ ५ ॥

॥ इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् [४. ४.] ॥

अथ मृत्पिण्डसाहित्येन यजमानाभिमन्त्रणं विधत्ते— "इन्द्र एव भवतीति। 'एषः' मृत्पिण्डः। "एतद्वा इत्यादेरय मर्थः— 'एतद्' इदानीं पिण्डसम्भरणकाले यजमानाभिमन्त्रणेन एतु 'वीर्यं' 'देवाः' इव 'अयं' यजमानोऽपि 'दधाति' निहितवान् भवतीति ॥ १ ॥

पूर्वं मन्त्राभिमन्त्रणं विधत्ते— "सोऽग्न इति *। अग्नि-रत्रात्मना स्तूयते— 'सः' त्वं 'रोदस्योः' द्यावापृथिव्योः 'गर्भः' इति जातः असि', तथा 'ओषधीषु' ओषधिवनस्पत्यादिषु विष-येषु 'चारुः' 'विभृतः' विशेषेण सम्भृतोऽसि, 'चित्रः' चित्र-वर्णः, 'शिशुः', 'अक्तून्' अक्तुशब्दो रात्रिवचनः, तत्रत्यानि 'तमांसि' 'परि' योग्यक्रियाध्याहारः, परीत्य, अतिरोचत इति। 'मातृभ्यः'–इति चतुर्थी। ओषधयोऽत्र मातृशब्दवाच्याः, तदर्थम्, तद्भक्षणार्थे 'कनिक्रदत्' अत्यर्थे क्रोधितशब्दं कुर्वन् 'अगाः' अगच्छसि †। "इणो गा लुङि"–इति गादेशः ‡।

मन्त्रं प्रतिपदं अनूद्य व्याचष्टे— "इमे वै द्यावापृथिवी रोदसी इति ॥ २ ॥

* का० श्रौ० सू० १६, ३, ६ ।
† वा० सं० ११, ४३ ।
‡ पा० सू० २, ४, ४५ ।

रासभाभिमन्त्रणे मन्त्रं विधत्ते— "अथ रासभं स्थिरो भवेति *। हे 'अर्वन्' अश्ववत् ! रासभ ! 'स्थिरः' निश्चलः 'भव'। 'वीड्वङ्गः' दृढाङ्गः, 'आशु' शीघ्रगतिः, 'वाजी' वेगवांश्च 'भव' इति। 'पृथुः' स्थूलः भव। 'सुषदः' शोभनसदनवान् भव। 'अग्नेः पुरीषवाहनः' गोमयस्य सैकतस्य वा वाहकत्वात् रासभस्य पुरीषवोढृत्वं प्रसिद्धम् ॥ ३ ॥

अजाभिमन्त्रणं विधत्ते— "अथाजं शिवो भवेति †। अङ्गिरः-पदेन अग्निरुच्यते; तद्देवत्यत्वात्। हे 'अङ्गिरः' अग्निरूप ! अज ! त्वं 'मानुषीभ्यः प्रजाभ्यः' 'शिवो भव'। 'द्यावापृथिवी' 'मा अभिशोचीः' मा हिंसीः। तथा 'अन्तरिक्षं', 'वनस्पतीन्'। सर्वत्र 'मा अभिशोचीः'-इति क्रियापदं सम्बन्धुमिति पदं प्रयुक्तम्। मन्त्रस्यार्धयोस्तात्पर्यमाह— "अङ्गिरा वा अग्निरित्यादिना ॥ ४ ॥

अश्वादिपशुत्रयाभिमन्त्रणगतसङ्ख्यां प्रशंसति— "त्रिभिरभिमन्त्रयते इति। अग्नेस्त्रिवृत्त्वं पुरस्तादुक्तम् ॥ ५ ॥

अत्र सूत्रम्— "धारयत्येषा मुपरि पिण्ड मसंस्पर्शयन्निति ‡। 'एषां' अश्वादीनां पशूनां उपरितनात् पशून् असंस्पर्शयन् पिण्डं धारयेदित्यर्थः। तदिदं विधत्ते— "अथैन मेतेषां पशूना मिति। उपस्पर्शनाभावं प्रशंसति— "वज्रो वै पशव इति। यतो वज्ररूपाः पशवः, मृत्पिण्डश्च रेतोरूपः, अतो वज्रेण रेतः विच्छिन्नं न करोमीति बुद्ध्या न स्पृशेत् पशून्। अथवा 'अयं' मृत्पिण्डो

* वा० सं० ११. ४४।
† वा० सं० ११. ४५।
‡ का० श्रौ० सू० १६. ३. २०

हि 'अग्निः', अग्निः पशून् मा हिंसीदिति बुद्ध्या न स्पृशेत्। 'हिनसानि'-इति लोटि रूपम्, 'हिनसत्'-इति पञ्चमलकारे रूपम् ॥ ६ ॥

अथाश्वस्योपरि धारणं समन्त्रं विधत्ते—"त मश्वस्योपरिष्टा-दिति *। 'वाजी' बलवान् अश्वः 'प्रैतु' आगच्छतु। तं विशिनष्टि— 'कनिक्रदत्' अत्यर्थं शब्दं कुर्वन्, 'नानदत्' सर्वा दिशो नादयन् 'रासभः' उपमाशब्दलोपः गर्दभ इव 'पत्वा' पतनशीलः। पतेः क्वनिपि रूपम्। 'पुरीष्यं' पशुहितम् 'अग्निम्' धारयन्, 'आयुषः' कर्मणोऽस्मात् 'पुरा' 'मा पादि' मा विनश्यतु †। पदेश्चिणि रूपम्।

अश्वस्योपरि धारणमन्त्रे रासभः पत्वेति गर्दभवचनस्य प्रयोजनमाह— "तदश्वस्य यजुषि रासभं निराहेति। अश्व-मन्त्रे रासभवचने तस्माद्रासभः अश्वस्यातिशयितत्वोक्तेः तस्मिन् गर्दभे शोकवत्तराचित्वमेव निहितं भवतीति। 'आयुषः'-इति-पदस्यार्थमाह 'कर्मणः' इति ॥ ७ ॥

अथोत्तरा ऋक्, संहितायामेव आम्नायते ‡—

"वृषाग्निं वृषणं भरन्नपाङ्गर्भꣳ समुद्रियम्
अग्न आयाहि वीतये ऋतꣳ सत्य ऋतꣳ सत्य
मग्निम्पुरीष्य मङ्गिरस्वद् भरामः"-इति §।

---

* का० श्री० सू० १६. ३. १०।

† वा० सं० ११. ४६. १।

‡ अस्माद्दृश्यसंहितायास्तु "वृषाग्निम्"-इत्यादिः "समुद्रियम्"-इत्यन्तस्य पाठः ४६ कण्डिकायाम्।

§ वा० सं० ११. ४७।

मष्टाक्षरतीयम्, "चत्वारोऽष्टका पादा जागतस्य महाबृहती" -इति। तस्य विभज्य विनियोगो विधीयते। तत्र तस्याः पूर्वार्द्धं तु रासभस्योपरि धारणम्, तृतीयपादेनाजस्योपरि धारणाय रासभ मृत्पिण्डहरणम्, चतुर्थेनाजस्योपरि धारणम्, पश्चमेनानड्वाहमुपेक्षणम्। तदाह सूत्रकार:— 'प्रैतु वाजी वृषाग्नि मित्यश्वखरयो रत्न आयाहीत्याहृत्य खराच्छागस्योपरि सत्य मित्यभिधानात्, आयन्त्यानयं पशूनज पुरस्ताद्रासभो मध्ये, स्वस्थानस्थितानामेवाहृणि, अनड्वाहुरूप मीयते पूर्ववदग्निं पुरीष्य मिति"-इति *। तदिदं सर्वं विधत्ते— "अथ रासभस्य वृषाग्निं वृषण मित्यादिना।

मन्त्रस्याय मर्थ †,— 'वृषणं' वर्षकं सदूपम् 'अग्निं' 'भरन्' 'अपाङ्गर्भं' गर्भभूतं, समुद्रे अन्तरिक्षे भवं 'समुद्रियं' 'भरन्' 'अग्निं' सद्रूप 'हव' सिञ्च। हवतेर्लोटि रूपम्। अत्राऽपि रासभं सम्बोध्य।

भाष्ये, वृषेति कप्रत्ययान्तं पद मिति व्याख्यातम्— "वृषा वा अग्निरिति।" तत्राय मर्थ,— 'वृषा' रेतस: सेक्ता 'रासभ:' 'वृषणम् अग्निं भरन्', तिष्ठतीति क्रियाध्याहार:। तृतीयपादे अग्निं सम्बोध्य। हे 'अग्ने' सद्रूप। 'वीतये' तर्पणाय 'आयाहि' रासभादागच्छ। 'ऋतम्' अग्निं, 'सत्यम्' आदित्यं, यद्वा, 'ऋतम्' आदित्यं, 'सत्यम्' अग्निं, उभयरूप मग्निम्, आहरिष्यामीति शेष:। 'पुरीष्यं' पशुहितं मग्निम्, 'अङ्गिरस्वद्' अग्निवत् 'भराम' सम्भराम इति।

* का० श्रौ० सू० १६ २ ११ १२, १३।

† पाठभेदस्तु वा० सं० ११ ४६ ख, ४७ क।

मन्त्रगतानि पदानि व्याचष्टे— "वृषा वा अग्निरिति ।, "तदेनं रासभेनेति । मन्त्रस्य पूर्वार्धेन रासभस्योपरि मृत्पिण्डधारणेन तस्मिन् इदं सम्भृतवान् भवति ॥ ८ ॥

खरात् सकाशात् मृदाहरणं समन्त्रं विधत्ते— "अथा-पादत्त इति । "अग्न आयाहीति तृतीयः पादः * । 'वीतये' -इत्यस्यार्थं माह— "अवितव इतीति । तदर्थमार्याद्रु वेतेः † "अग्ने बृहेव॰"-इति [illegible] क्तिन् , स चोदात्तः ‡ । अपादानं प्रशं-सति— "तदेनं तच्चयेति । 'एनं' मृत्पिण्डं 'ब्रह्मणा' ब्रह्म-रूपेण 'यजुषा' "अग्न आयाहि"-इति पाठेन 'एतस्मात्' 'शौद्रात्' अर्थात् अपादत्तवान् भवति । रासभस्य वैश्यशूद्रजातिसम्बन्धो वक्ष्यते— "वैश्यं च शूद्रं चानु रासभ इति § ॥ ९ ॥

अजस्योपरि धारणमर्थं विधत्ते— "अथाजमश्वं मिति । ऋतं सत्य मिति द्विवारं पठ्यते, तत्र प्रथमऋतसत्यपदयोरर्थ माह— "अयं वा अग्निरृत मिति । "यदि वेति, द्वितीयऋत-सत्यपदयोरर्थकथनम् । 'असौ' विप्रकृष्टः 'आदित्यः' 'ऋतम्', 'अथ अग्निः सत्यम्' ; उभयरूपोऽयं मग्निर्मृद्रूपः ॥ १० ॥

अग्निम्पुरीष्य मिति मन्त्रशेषस्य विनियोग उत्तरत्र वक्ष्यते ‖ , इदानीं मन्त्रादीनां मुपरि धारणे विनियुक्तमन्त्रगतमन्त्रं विह-दन्यात्मना स्तौति— "निमिरिति । "प्रैतु वाजी"-इति

---

* ११८ पृ० १८पं० द्रष्टव्यः ।
† आदा० प० ३० धा० ।
‡ पा० सू० ३. ३ २३ ।
§ इहैव वाक्यकण्डिका (११९ पृ०) द्रष्टव्यम् ।
‖ इहैवोपरिष्टात् चतुर्थकण्डिका (१२२) द्रष्टव्यम्

एको मन्त्रः, "वृषाग्नि:"—इति महाबृहत्या अपरः; रासभाजयोरुपरि धारणे विनियुक्तौ द्वौ मन्त्रौ *। मन्त्रस्य लक्षणं याज्ञिकसमाख्यान मिति; अत एकस्या ऋचि विभज्य विनियोगात् अस्या बहुधः सम्पाद्यन्त इत्यविरोधः †।

पूर्वं मश्वाद्यभिमन्त्रणे विनियुक्तमन्त्रसङ्ख्याम् मिलित्वा प्रशंसति— "त्रिभिः पुरस्तादिति। अभिमन्त्रणमन्त्रास्त्रयः, धारणमन्त्रास्त्रयः, ते षट् सम्पद्यन्ते; तस्य स्तावकं ब्राह्मणं मतिदिशति—"तस्योक्तो बन्धुरिति। पिण्डपरिग्रहमन्त्रसङ्ख्याप्रस्तावे—"ताः षट् सम्पद्यन्ते, षड् ऋतवः"—इत्यादिना ‡ ॥ ११ ॥

अथैतेषां पशूना मावर्त्तनं विधत्ते— "पर्येनान् पशूनिति। स्वस्थानावस्थितानां मेवावर्त्तनम्। तत्रागन्तृणां पशूनां क्रमं विधत्ते —"तेषां अजः प्रथम इति §। पूर्वम् 'इतः' मृदाहरणार्थं 'यतां' गन्तृणां 'पशूनां' मध्ये 'अश्वः' प्रथमो गतः, 'रासभः' मध्ये, पश्चात् 'अजः'; अधुना 'अजः' प्रथमः, 'रासभः' मध्ये, पश्चात् 'अश्वः'। गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम्। "अर्थं वा अन्वश्वः"—

* वा० सं० ११. ४६. १, ४६. २, ३, ४७. १। अथाह महीधरः— "क्ता० धारयन्नेषा सुपरि पिण्ड मनुपस्पृशन् प्रैतु वाणी वृषाग्नि मित्यश्वखरयोरिति। अश्वादीनां सुपरि पिण्डं धारयति तानस्पृशन् प्रैतु वाणीत्यश्वोपरि वृषाग्नि मिति खरोपरीति सूत्रार्थः। महापङ्क्तिस्त्रावसाना अष्टार्णषट्पादा महापंक्तिः। आद्यावद्वैर्षविश्वदेवत्यौ, तृतीयो द्वैर्षोरासभदेवत्यः, तृतीयचतुर्थपादौ यजुषी"—इति।

† पुरस्तात् २३८ पृ० ४ पङ्क्तितः २३९ पृ० १० पङ्क्तिपर्यन्तं द्रष्टव्यम्।

‡ पुरस्तात् ३ प्र० ३ ब्रा० १० क० ( २१३ पृ० ) द्रष्टव्या।

§ का० श्रौ० सू० १६. ३. १२।

इत्यादेरय मर्थः— अश्वादिपशुत्रयस्य क्षत्रियजातिसम्बन्धः, क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्तात् गमनं लोके दृष्ट मिति। तत्र यथा गमनसमये अश्वस्य प्राथम्यम्, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम्, वैश्यशूद्रयोः क्षत्रियाद् ब्राह्मणाद्वा पुरस्ताद् गमनं नास्तीति मृदाहरणसमये पुनरागमन-समये च रासभस्य न प्राथम्यम्। तस्मात् कारणादेवम्— यान्ति अश्वपूर्वाः प्रथमे, अधुनाऽजपूर्वा आगच्छन्ति 'पापवस्यसाय' पापपरिहाराय। ब्राह्मणेन क्षत्रियेण च 'एतौ' वैश्यशूद्रौ 'अभितः' मध्ये 'परिक्रीतौ', 'अनपक्रमिणौ' अनपक्रान्तौ 'कुरुते' ॥ १२, १३ ॥

विधत्ते— "अथानडापुरुष मिति *। तत्र पुरुष मिति पञ्चमम्। "अग्निं पुरीष्य मिति †। तदीयेन तेनापि 'अगवा-पुरुषेण' पुरुषपशुप्रतिनिधिना सर्वं सम्भृतवान् भवति ॥ १४ ॥

विधत्ते— "त मजस्योपरिष्टादिति। अजस्योपरि मृत्पिण्डं धारयन्नेव 'एति' आगच्छेदित्यर्थः। तथाविधं गमनं मुभयथा प्रशंसति— "आग्नेयो वा अज इति। 'अजः' अग्निदेवत्यः, मृदप्यग्निः; अतोऽजस्योपरि धारणात् स्वेन रूपेण स्वदेवत्यं च सम्भृतवान् भवति। अपि अजो ब्राह्मणजातीयः; ततो ब्राह्मणेनाग्नेयं मृत्पिण्डं सम्भृतवान् भवति ॥ १५ ॥

अथाजस्कन्धात् मृत्पिण्डस्यावरोहणं समन्त्रं विधत्ते ‡—

---

* का० श्रौ० सू० १६. ३. १२।

† वा० सं० ११. ४७. २।

‡ का० श्रौ० सू० १६. ३. १४।

"भयेन" सुपावहरतीति। हे 'ओषधयः !' 'युष्माः' अत्र शसः सकारस्य "तस्माच्छसो नः"—इति * नत्वे कृते विसर्जनीयः, युष्मानभिलक्ष्य 'आयन्तम्' आगच्छन्तं 'शिवम्' 'एतं' पुरोवर्त्ति-नम् 'अग्निं' 'प्रति मोदध्वम्' प्रतिमोदध्व भयराहित्यार्थम्।

उत्तरार्द्धे † रुद्ररूपोऽग्निः सम्बोध्यः। 'विश्वाः' 'अनिराः' 'इराः' —इत्यन्ननाम ‡। अन्नप्रतिबन्धहेतून् अनावृष्ट्यादीन्, 'अमीवाः' रोगाय 'व्यस्यन्' विक्षिपन्, हेतौ शतृप्रत्ययः। रोगादिविक्षे-पहेतोः 'निषीदन्' उपविशन्, 'नः' अस्माकं 'दुर्मतिं' दुष्टु-तिमयीं मतिम् 'अपजहि' अपनयेति।

प्रतिमोदध्वमिति यदोषधीः प्रत्युक्तम्, तस्याभिप्रायमाह— "एतद्वैतस्मादायत ओषधय इति। 'आयतः' अग्नेः सकाशात् 'ओषधयो बिभ्यति' स्वस्यात्मानं भक्षयिष्यति किलेति। तत्परि-हाराय प्रतिमोदध्वमिति। यतोऽग्निः शान्तः, ओषधयो यूयं एनं प्रतिमोदध्वम्, 'शिवः' सुखकर एव स्वरूपः 'वः' युष्मान् 'अभ्येति' अभिगच्छति; न वो हिंसिष्यतीति तात्प-र्यार्थः। उत्तरार्द्धगतं दुर्मतिपदं व्याचष्टे— "सर्वं पाप्मानं जहीति ॥ १६ ॥

द्वितीयं मन्त्रं विधत्ते— "ओषधयः प्रतिगृभ्णीतेति §"। हे 'ओषधयः'। 'एनम्' अग्निम् 'प्रतिगृह्णीत'। ता विशि-नष्टि— 'पुष्पवतीः' पुष्पवत्यः, पुष्पसम्पन्नाः, 'सुपिप्पलाः'

---

* पा० सू० ६ १ १०३ ।

† वा० सं० ११. ४७, २ दृष्टव्यम् ।

‡ निघ० २ अ० ७ ख० १२ प० ।

§ वा० सं० ११ ४८ ।

सप्तमकाण्डादौ गार्हपत्यचयनप्रस्तावे वक्ष्यत इत्याह— "तासा मुपरि वसुरिति * ॥ १८ ॥

"परिश्रितं भवतीति। तासां विकीर्णानां परिश्रित मिव परिवृतं भवेत्। परिश्रित्करणं नाम रक्षोभीत्या पुरस्य करण मित्यर्थः। प्रकारान्तरेण स्तौति— "अथो योनिर्वा इय मिति। इदं परिश्रितं स्थानं योनिरूपम्, 'इदं' पिण्डरूपं 'रेतः' इतश्च योनौ 'तिरः' तिरोहितम् अप्रकाशं 'सिच्यते'। एत मर्थं लोकप्रसिद्धा द्रढयति— "तस्मादिति। 'तस्मात्' खलु लोके 'स्वया जायया अपि' परिवृतस्थाने 'तिर इवैव' 'मिथु-रिपति' चरित मिच्छति ॥ १९ ॥

"अथैनं विष्यतीति †। 'विष्यति' प्रमुञ्चेत्। पूर्वं कृष्णा-जिनपुष्करपर्णयोर्मध्ये पिण्डं निधाय, अन्तान् समुद्गृह्य, योक्त्रेण बन्धनं कृतम्; तद् योक्त्र मन्तोद्ग्रहणञ्च मुञ्चेदित्यर्थः। "तस्य-दैवास्येति। पूर्वमन्त्रोपनद्धस्य बद्धस्य पिण्डस्य शोको जातः, 'तां' बन्धनजातां 'शुचं' 'अस्मिन्' तद्विमोकेन निहितवान् भवति। किञ्च पुष्करपर्णं च योनिरूप मित्युक्तम् ‡, अतो बन्धनरूपयोक्त्रविमोकात् 'योनेरेव' पिण्डं मुखात्यात्मना आयता मित्यभिप्रायेण तद्विमोक इत्यर्थः ॥ २० ॥

मन्त्रं विधत्ते— "विपाजसा पृथुनेति §। पाज इति बल-नाम ‖। 'पृथुना' बलेन 'शोशुचानः' दीप्यमानोऽग्निस्त्व'

---

* उपरिष्टात् (७ का० ५ प्र० २ ब्रा० ८, १० क०) द्रष्टव्ये।
† का० श्रौ० सू० १६. ३. १५ क।
‡ पुरस्तात् २०३ पृ० ७ क० द्रष्टव्य।
§ वा० स० ११ ५८।　　‖ निघ० २ अ० ८ ख० ३ प०।

'द्विषः' द्वेष्यान् 'रक्षसः' राक्षसांश्च 'अमीवाः' रोगांश्च 'विबाधस्व'। एवं प्रत्यक्षतो याचित्वा, इदानीं अग्निं परोक्षीकृत्य स्वयं प्रार्थयमानः ते 'सुशर्मणः' साधुशरणस्य, 'बृहतः', 'सुहवस्य' शोभनाह्वानस्य 'अग्नेः' 'प्रणीतौ' प्रकृष्टनीतौ 'शर्मणि' शरणे वयं 'स्याम' भवेम मित्यर्थः। मन्त्रस्यार्धयोस्तात्पर्यमाह— "बाधस्व सर्वान् पाप्मन इति, "आशिषं आशास्त इति च ॥ २१ ॥

अथ सूत्रम्— "अजलोमान्यादाय प्राङुदीचः पशूनुत्सृजतीति *। तद् विधत्ते— "अथाजलोमानीति। 'उदीचः प्राचः' ईशानदिगभिमुखान् 'प्रसृजति' विसृजेत्। तां दिशं प्रशंसति— "एषा ह्युभयेषा मिति। गतमन्यत् ॥ २२ ॥ ५ [ ४. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

* का० श्रौ० सू० १६. २ २५।

धान्याद्रिं धान्यजन्मा तिलभव मतुलः स्वर्णजं स्वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्य ।
आज्योत्थं आज्यजन्मा लवणज मकृशः शार्करं शार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पावसाभिङ्गमार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

* अयमश्लोकार्थः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्यः।

अथाजलोमैः सꣳसृजति। स्थेम्ने न्वेव यद्वे-वाजलोमैरेतद्वा ऽएनं देवाः पशुभ्योऽधि समभरं-स्तथैवैन मय मेतत् पशुभ्योऽधि सम्भरति तद्यद-जलोमैरेषाजे हि सर्व्वेषां पशूनाꣳ रूप मय यल्लोम लोम हि रूपम् ॥ ४ ॥

मित्रः सꣳसृज्य। पृथिवीं भूमिञ्च ज्योतिषा सहेति प्राणो वै मित्रः प्राणो वा ऽएतदग्रे कर्मा-करोत् सुजातं जातवेदस मयक्ष्माय त्वा सꣳसृजामि प्रजाभ्य इति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

अथैतत्त्रयं पिष्टं भवति। शर्कराश्मायोरस-स्तेन सꣳसृजति स्थेम्ने न्वेव यद्वेव तैनैतावती वा ऽइय मग्रे ऽसृज्यत तद्यावतीय मग्रे ऽसृज्यत तावती मेवैना मेतत् करोति * ॥ ६ ॥

रुद्राः सꣳसृज्य। पृथिवीं बृहज्ज्योतिः समी-धिर ऽइत्यसौ वा ऽआदित्य एषो ऽग्निरेतद्वै तद्रुद्रा सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे तेषां

---

* 'करोति'—इति क, ख।

उखां कृणोतु । शक्त्या बाहुभ्यामदितिर्धियेति शक्त्या च हि करोति बाहुभ्यां च धिया च माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ ऽइति 'यथा माता पुत्रमुपस्थे बिभृयादेवमग्निं गर्भे बिभर्त्वित्येतत् * ॥ ११ ॥

त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत् प्रयौति द्वाभ्यामुपसृजति तत् पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति त्रिभिरुपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवत्यथो ऽष्टाक्षरा वा ऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत् करोति ॥ १२ ॥ ६ ॥

॥ इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् [५. १.] ॥

---

* 'बिभर्त्विवेतत्'—इति च, छ।

भावयित्र्यः । 'स्था'। 'हि' यस्मात् ता एवम्भूता यूयं 'नः' अस्मान् 'ऊर्जे' अन्नाद्याय 'दधातन' स्थापयत। "तप्तनप्तनथनाश्च"–इति * तस्य तनबादेशः । 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय, ज्ञानाय भवेति ॥ ॥ "यो वः इति। 'वः' युष्माकं 'यः' 'शिवतमः' अतिशयेन सुखकरः 'रसः', 'तस्य' रसस्य 'नः' अस्मान् 'इह' लोके 'भाजयत' भागिनः कुरुत। 'उशती' कामयमाना 'मातर इव' यथा मातरः पुत्रस्य हितं कामयन्ते, एवं यूयमिति॥ ॥ "तस्मा अरमिति। 'वः' युष्मत्सम्बन्धिने 'तस्मै' रसाय 'अरं' शीघ्रम्, 'अलं' पर्याप्तं वा 'गमाम' गच्छेम। "क्रियार्थोपपदस्य"–इति † चतुर्थी। 'यस्य' रसस्य 'क्षयाय' अस्मासु निवासार्थं हि स्वयं 'जिन्वथ' प्रीणयथ। 'जिवि प्रीणनकर्मा ‡। येन रसेन अस्मान् तर्पयथ, तं गच्छेम। हे 'आपः' 'नः' अस्मान् 'जनयथ' युष्मदीयभोक्तृत्वेनोत्पादयतेति तृचस्य सङ्गृहीतोऽर्थः ॥

तिस्र ऋचः, तत्प्रतिपाद्या अब्देवताश्च प्रशंसति— "यां वै देवता मिति। 'आपो हि ष्ठेत्यादिका 'ऋक्' 'यां देवताम्' 'अभ्यनूक्ता' अनुवदति, कर्तरि क्तः प्रत्ययः। 'यां' देवतां 'यजुः' अभ्यनूक्तोऽपि। यया ऋचा, येन यजुषा च, या देवता अन्यगुणाभिधानपुरस्सरं प्रतिपाद्यते, सैव प्रतिपाद्या देवता, सा च प्रतिपादिका ऋक्, यजुर्मन्त्रपदैरप्रतीयमाना देवता नोक्तेत्यर्थः। अतः प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण 'एता'

* पा० सू० ७ १ ४५।
† पा० सू० २ ३ १४
‡ धा० पा० ५६४ धा०

आपः 'एव' देवताः , 'एताः' "आपो हि ष्ठाः"–इति 'त्रिचः' । 'तत्' तस्मात् 'याः' 'अमूः' अदःशब्दो विप्रकृष्टप्रदेशवचनः । पूर्वं काण्डादौ अग्निसृष्टेरनन्तरम् अब्धादि पृथिव्यन्तां सृष्टिं मुक्त्वा *, "सोऽकामयताभ्योऽद्भ्योऽधि प्रजनयेय मित्युपक्रम्य †, "तदिद मेक मेव रूपं" ज्ञातवान् भवति । एव मनुसन्धानार्थं मुदकफेनमृत्सिकताशर्कराश्मादिसृष्टिरुक्तेति चयनादौ प्रतिपादितम् ‡ ॥ २ ॥

पिण्डे फेनावेचनं विधत्ते— "अथ फेनं जनयित्वेति § । अपायोदकेषु हस्ताघातनेन फेनं मुत्थाप्य पिण्डे तूष्णी मासिञ्चेत । "यदेव तत्फेन" इत्यादेरय मर्थः । पूर्वं "सोऽकामयताभ्योऽद्भ्यो ऽधीमाः प्रजनयेयम्"–इत्युपक्रम्य , "तदिद मेक मेव रूपं समवर्त्तताप एव"–इति ‖, उदकलक्षणं रूप मुक्त्वा , "सोऽकामयत भूय एव स्यादिति तेपानः फेन मसृजत"–इति ¶ द्वितीयं फेनात्मकं रूपं सृष्ट्यात्मकम् । अत्र फेनस्य पिण्डे आसेचनेन पूर्वसृष्टफेनात्मकं द्वितीयं रूप मेव मृद्रूपेऽग्नौ निहितवान् भवति ।

अथ सिक्तेऽग्नौ उदकेन मृदः सम्मिश्रणं विधत्ते— "अथ या मेव तत्र मृद मिति । तत्र 'यां मृदं' 'संयौति' जलेन सम्मिश्रयति 'सा मृत्' । एतदनन्तरं सृष्टं मृदात्मकं तृतीयं रूपम् । तत्र चैव माम्नातम्— "अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्य-

---

* १ प्र० १ ब्रा० ११ कण्डीतः ( ४ पृ० ) द्रष्टव्यम् ।

†, ‡ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम् ।

§ का० श्रौ० सू० १६. ३ १७ ।

‖, ¶ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम् ।

प्रवती *। या एवंविधा सिनीवाली, सा। हे 'अदिति', हे 'महि' महीरूपे! 'तुभ्यं' 'हस्तयोः' 'उखां' 'दधातु' स्थापयतु। "योषा वै सिनीवाली"–इत्यादिना योषात्वसमर्थनम् ॥ १० ॥

"उखां कृणोत्विति †। अयं तृतीयो मन्त्रः। तस्यायमर्थः,— 'अदितिः' अखण्डनीया, एतन्नामधेया देवता 'बाहुभ्यां' 'शक्त्या' सामर्थ्येन 'धिया' बुद्ध्या च 'उखां' 'कृणोतु' करोतु। 'यथा माता, पुत्रं' 'उपस्थे' क्रोडे 'बिभर्त्ति', एवं सा अदितिः 'गर्भे' उखाभ्यन्तरे 'अग्निम्' 'आबिभर्त्तु' सर्वतो धारयतु 'इति' ॥ ११ ॥

अग्निचयनमन्त्रगतत्रित्वसङ्ख्यां त्रिवृदन्यात्मना स्तौति— "त्रिभिः प्रयौति त्रिवृदिति। पूर्वं अजलोमशर्करादिसंसर्गे मन्त्रौ द्वौ, ताभ्यां सहोक्तसङ्ख्यां प्रशंसति— "द्वाभ्यां संसृजति, तत् पञ्च पञ्चचितिकोऽग्निरिति। "पञ्चर्त्तव इति। "हेमन्तशिशिरयोः समासेन"–इत्युक्तम् ‡। अग्नेः संवत्सरात्मकत्वात्, अनेन पञ्चसङ्ख्यया तद्रूपां स्वदं सम्पादितवान् भवति, अथोदकसेचने "आपो हि ष्ठेत्याद्यास्तिस्रः, ताभिः सहैतां पञ्चसङ्ख्यां प्रशंसति— "त्रिभिरप उपसृजति तदष्टाविति। अग्नेर्गायत्रत्वं सङ्ख्यासामान्यात्। तथा चान्यत्राम्नातम्— "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुर्गायत्रोऽग्निरिति"–इति §।

---

* अशुद्धं पदमिदं स्यात् सायणस्य, "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः"—इति वैयाकरणसिद्धान्तात्।

† वा० सं० ११. ५७।

‡ ऐ० ब्रा० १. १. १।

§ ६ प्र० २ ब्रा० ६ क० (३१ पृ०) द्रष्टव्यम्।

यद्वेवाह मखस्य शिरो ऽसीति । जायत ऽएष एतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाता ऽइति ॥ २ ॥

तं प्रथयति । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वदित्ययं वै लोको निधिस्त मेतद्-वसवो गायत्रेण छन्दसाकुर्व्वंस्तथैवैन मय मेतद् गायत्रेण छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठिता-सीति पृथिव्यसीति पृथिवी ह्येष निधिर्धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यज-मानायेत्येतद्वै वसव इम लोकं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमान इमं लोकं कृत्वा तस्मिन्नेता माशिष माशास्ते तां प्रादेशमात्रीं कृत्वाधाय्यै सर्व्वतस्तीर मुन्नयति ॥ ३ ॥

अथ पूर्व्वं मुद्धि मादधाति । रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदित्यन्तरिक्षं वै उद्धिस्त मेतद् रुद्रास्त्रैष्टुभेन छन्दसा कुर्व्वंस्तथैवैन मय मेतत् त्रैष्टुभेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठिता-

सीत्यन्तरिक्ष मसीत्यन्तरिक्षꣳ ह्येष उद्धिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै रुद्रा अन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमानो ऽन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशास्ते ताꣳ संलिप्य सꣳश्लक्ष्णाय * ॥ ४ ॥

अथोत्तर मुद्धि मादधाति । आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वदिति द्यौर्हैष उद्धिस्त मेतदादित्या जागतेन छन्दसाकुर्व्वँस्तथैवैन मय मेतज्जागतेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यो प्रतिष्ठितासीति द्यौरसीति द्यौर्ह्येष उद्धिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वा ऽआदित्या दिवं कृत्वा तस्या मेता माशिष माशासत तथैवैतद्यजमानो दिवं कृत्वा तस्या मेता माशिष माशास्ते ॥ ५ ॥

अथैतेन चतुर्थेन यजुषा करोति । विश्वे

---

* 'सꣳश्लक्ष्णा'—इति क", ग ।

त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिति दिशो हैतद्यजुरेतद्वै विश्वे देवा वैश्वानरा एषु लोकेषूखाया मेतेन चतुर्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमान एषु लोकेषूखाया मेतेन चतुर्थेन यजुषा दिशो दधात्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यो प्रतिष्ठितासीति दिशोऽसीति दिशो ह्येतद्यजुर्धारया मयि प्रजाᳪ रायस्पोषं गौपत्यᳪ सुवीर्यᳪ सजातान्यजमानायेत्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेता माशिष माशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वेता माशिष माशास्ते ॥ ६ ॥

तेनैतेनान्तरतश्च बाह्यतश्च करोति। तस्मादेषां लोकाना मन्तरतश्च बाह्यतश्च दिशोऽपरिमित मेतेन करोत्यपरिमिता हि दिशः ॥ ७ ॥

तां प्रादेशमात्री मेवोर्ध्वां करोति। प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति ॥ ८ ॥

सा यदि व्यर्षीयसी प्रादेशात्स्यात्। एतेन यजुषा ऋसीयसीं कुर्याद्यदि ऋसीयस्येतेन व्यर्षीयसीम् ॥ ६ ॥

स यद्येकः पशुः स्यात् *। एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा व्वीर्यं वा ऽइषुव्वीर्यसम्मितैव तन्नवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥ १० ॥

अथ तिरश्चीऽ रास्नां पर्यस्यति। दिशो हैव सैतद्दे देवा इमांल्लोकानुखां † कृत्वा दिग्भिरदृऽहन् दिग्भिः पर्यतन्वंस्तथैवैतद्यजमान इमांल्लोकानुखां ‡ कृत्वा दिग्भिर्दृऽहति दिग्भिः परितनोति ॥ ११ ॥

ता मुत्तरे व्विहृतीये पर्यस्यति। अत्र हैषां लोकाना मन्ताः समायन्ति तदेवैनांसद् हृऽहति § ॥ १२ ॥

---

* 'स्यात'—इति ग, घ।

† 'इमाऽल्लोका॰'—इति ग, घ।

‡ 'इमाऽल्लोका॰'—इति ग, घ।

§ 'दृऽहति'—इति ख।

आदित्यै रास्नासीति । व्यृद्धा वै यज्ञे रज्जुर-वरुद्ध्या मेवैना मेतद्रास्नां कृत्वा पर्य्यस्यति * ॥ १३ ॥

अथ चतस्र ऊर्द्ध्वाः करोति । तूष्णी मेव दिशो हैव ता एतद्वै देवा इमांल्लोकानुखां† कृत्वा दिग्भिः सर्व्वतो दृꣳहंस्तथैवैतद्यजमान इमां-ल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृꣳहति ॥ १४ ॥

ता एता ऐतश्यै भवन्ति । एतद्वा ऽएता एता-मस्तभ्नुवंस्तथैवैना मेतत् स्तभ्नुवन्ति तद्यदत ऊर्द्ध्वं तद्देतया तिरश्च्या दृढ मथ यदतोऽर्व्वाक्तदे-ताभिः ॥ १५ ॥

तासां मध्येषु स्तनानुन्नयन्ति । एतद्वै देवा इमांल्लोकानुखां कृत्वैतै स्तनैः सर्व्वान् कामानदु-हत तथैवैतद्यजमान इमांल्लोकानुखां कृत्वैतै स्तनैः सर्व्वान् कामान् दुहे ‡ ॥ १६ ॥

सैषा गौरेव § । इमे वै लोका उखेमे लोका

* 'पर्य्यस्यति'—इति ख ।

† 'इमांल्लोका॰'—इति ग, घ ।

‡ 'दुहे'—इति ग, 'दुहे'—इति घ ।

§ 'गौरेव'—इति ग, घ ।

गौस्तस्या ऽएतद्दूधो यैषा तिरश्ची गास्ता सा व्वितृतीये भवति व्वितृतीये हि गोरूधः ॥ १७ ॥

तस्मै स्तनानुन्नयति। ऊधसस्तत् स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः * ॥ १८ ॥

ताए हैके द्विस्तनां कुर्व्वन्ति। यथो ऽअष्टस्तनां न तथा कुर्याद्यो वै गोः कनीयस्तनाः पशवो ये भूयस्तना अनुपजीवनीयतरा वा ऽअतेते ऽनुपजीवनीयतराए हैनां ते कुर्व्वतेऽयो ह ते न गां कुर्व्वते शुनीं वाविं वा व्वडवां वा तस्मात्तथा न कुर्यात् ॥ १९ ॥

अथास्यै बिल मभिपद्यते। अदितिष्टे बिलं गृभ्णात्विति व्वाग्वा ऽअदितिरेतद्वा ऽएनां देवाः कृत्वा व्वाचादित्या निरष्ठापयंस्तथैवैना मय मेतत् कृत्वा व्वाचादित्या निष्ठापयति ॥ २० ॥

तां परिगृह्य निदधाति। कृत्वाय सा महीमुखा मिति कृत्वाय सा महती मुखा मित्येतन्

---

* 'गौः'—इति ग, घ ।

मृन्मयीं योनिं मग्नय ऽइति मृन्मयी ह्येषा योनि-रग्नेः पुत्रेभ्यः प्रायच्छददितिः श्वभ्रयानित्येतद्वा ऽएना मदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत्तथैवैना मय मेतत् कृत्वा देवेभ्यः श्रपणाय प्रयच्छति ॥ २१ ॥

ता हैके तिस्रः कुर्व्वन्ति । त्रयो वा ऽइमे लोका इमे लोका उखा इति वदन्तोऽयो अन्यो ऽन्यस्यै प्रायश्चित्त्यै यद्यीतरा भेत्स्यते ऽथेतरया भरिष्यामो यदीतरायेतरया मिति न तथा कुर्याद्यो वा ऽएष निधिः प्रथमोऽयं स लोको यः पूर्व्व उद्दिरन्तरिक्षं तद्य उत्तरो द्यौः साथ-यदेतच्चतुर्थं यजुर्दिशो हैव तदेतावद्वा ऽइदं सर्व्वं यावदिमे च लोका दिशश्च स यदन्योपाहरेदति तद्रेचयेद्युद्ध वै यज्ञेऽतिरिक्तं क्रियते यजमानस्य तद् द्विषन्तं भ्रातृव्य मभ्यतिरिच्यते यदु भिद्यायै प्रायश्चित्ति-रुत्तरस्मिंस्तदन्वाख्याने ॥ २२ ॥ ७ ॥

॥ इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् [५. २.] ॥

अथोखाया अधस्तात् पर्याप्तमृत्पिण्डादानं विधत्ते— "अथ मृत्पिण्ड मिति । 'निधिः' नाम उखाया अधस्तनम्, तस्मै ; 'धावन्तं' पर्याप्तं 'मन्यते' यजमानः, तावन्तम् आददीत । उखाकरणे यजमानः कर्त्ता । तथाच कात्यायनः— "यजमान उखां करोति मृद माहाय मखस्य शिर इति"–इति *। आदाने मन्त्रं विधत्ते— "मखस्य शिरोऽसीतीति †। एतद् यजुर्व्याचष्टे— "यज्ञो वै मख इति । यथा आहवनीयो यज्ञस्य शिरः, अग्न्याधारत्वात् ; एवं मृत्पिण्डोऽपि वह्न्याधारत्वात् आहवनीयस्य चीयमानत्वाच्च लक्षणया यज्ञशिर इत्युच्यते ॥ १ ॥

प्रकारान्तरेण स्तौतु मनुवदति— "यद्देवाह मखस्येति । इष्टकाभिश्चीयते इति यत्, तत् एषोऽग्निर्जायते । चयनं नाम जन्मेत्यर्थः । लोके हुत्पद्यमानः पुरुषः प्रथमं 'शीर्षतः' शिरःप्रभृतिक एव 'चीयते' जायते । एव मग्निः शीर्षतो जायता मित्यभिप्रायेण "यज्ञस्य शिरोऽसि"–इत्युक्तम् । 'जायाते'–इति जनेः पञ्चमलकारे रूपम् ॥ २ ॥

तत्र प्रथमं समन्त्रं विधत्ते— "तं प्रथयतीति ‡। 'प्रथयति' विस्तारयति । उखा नाम लोकत्रयात्मिकेति स्तुता, तत्र 'निधिः' भूलोकः ; उत्तरत्र "द्यौर्ह्येष उद्धिर्धारयेति श्रवणात् §। उत्तरोत्तरमृत्पिण्डप्रदेशौ अन्तरिक्षद्युलोकात्मकौ ; अतो मन्त्रत्रयेऽपि लोकत्रयवाचकानि पदानि विद्यन्ते । यथा,

* का० श्रौ० सू० १६. ३ १३ ।
† वा० सं० ११. ५७. २ ।
‡ का० श्रौ० सू० १६. ३ २६ ।
§ एतस्मिन्नेव ब्राह्मणे पञ्चमकण्डिकायां (२९९ पृ० १२पं०) द्रष्टव्यम् ।

निधिपदमन्त्र एवं मान्नायते—

"वसवस्त्वा कृण्वन्तु गायत्रेणच्छन्दसाऽङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजाए रायस्पोषं गौपत्यए सुवीर्यए सजातान् यजमानाय"–इति * ।

अथ मन्त्रः,—'वसवः' नाम भूलोकरक्षका देवाः 'त्वा' त्वाम् उखां भूलोकात्मिकां 'कृण्वन्तु' कुर्वन्तु 'गायत्रेण छन्दसा' सह 'अङ्गिरस्वत्' प्राणवत्, हे उखे! 'ध्रुवा असि' स्थिरा असि, 'पृथिवी' भूलोकात्मिका च भवसि। "धारया मयि"–इति यजुःशेषेण यजमाने आशिषं आशास्ते ; यजमानाय मयीतिसप्तमीनिर्देशात्। 'यजमानाय'–इति सप्तम्यर्थे चतुर्थी। 'प्रजा' 'धारय' स्थापय। 'रायस्पोषं' धनपुष्टिम्, 'गौपत्यं' गवां पतित्वम्, 'सुवीर्यं' सुवीराणां कर्म, अथ 'सजातान्' समानोदरे जातान् भ्रातॄनपि। धारयेति सर्वत्र सम्बन्धः ॥

मन्त्रं व्याचष्टे,— "अयं वैव लोको निधिरिति। 'एषः' भूलोकः 'निधिः' उखाया अधस्तनम्। तदेतत् यथा 'वसवोऽकुर्वन्', एवं यद्यपि वसव इति पाठेन भूलोक मेव कृतवान् भवति। ध्रुवासीत्यस्य व्याख्याने स्थिरासीति, तस्य व्याख्यानं प्रतिष्ठितासीति। पृथिव्यसीत्यस्य व्याख्याने पृथिवी ह्येष निधिरिति। निधिर्नामोखाया अधस्तन मिति प्रागुक्तम् †। धारयामीत्यादिना यजमानस्य आशीराशासनम् ॥

उत्तरस्योखाया ऊर्द्धपरिमाणं वक्ष्यते ‡, अत निधेस्तिर्यग्-

* वा० सं० ११, ५८, १।

† प्रथमकण्डीयाख्याने ( २६७ पृ० २ पं० ) द्रष्टव्यम्।

‡ अष्टमकण्डीदद्रष्टव्यम् ( २६२ पृ० १६ पं० )।

विस्तारस्य परिमाणं विधत्ते— "तां प्रादेशमात्रीं मिनोति। 'तां' निधिं पर्य्यासां सदं तिर्यक् 'प्रादेशमात्रीं कृत्वा' 'अथ' अनन्तरम् 'अस्यै' अस्याः विस्तारितायाः निधेर्मृदः 'सर्वतः' 'तीरम्' अन्तम् 'उत्रयति' ऊर्द्धं कुर्य्यात्। तथाच सूत्रम्— "वसवस्त्वेति प्रथयन्त्यन्तानुन्नीय सर्वतः"–इति * ॥ २ ॥

अथ तिर्यक् प्रादेशमात्रं विस्तारितायाः निधिमृदः उपरि मृत्पिण्डप्रक्षेपमन्त्रं विधत्ते— "अथ पूर्वं मृदि माद्धातीति। 'पूर्वं' प्रथमम्। 'उद्दि'-शब्दो मृत्पिण्डप्रक्षेपवाची। अत एव कात्यायनः— "प्रथमं धातुं माद्धाति"–इत्युक्तवान् †। धातुशब्द उत्तरोत्तरक्रमेणावस्थानं माह; "त्रिधातुमलानुपातम्"–इत्यादिप्रयोगदर्शनात् ‡ ॥

अथ द्वितीयमन्त्र एव मान्नायते— "रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेनच्छन्दसाऽङ्गिरस्वद् ध्रुवास्यन्तरिक्ष मसि धारया मयि प्रजा रायस्पोषं गौपत्यं सुवीर्यं सजातान् यजमानाय"–इति §।

मन्त्रस्याय मर्थः,— हे उखे! त्वां 'रुद्राः' अन्तरिक्षाभिमानिनः 'कृण्वन्तु'। अत्र मन्त्रे 'त्रैष्टुभेन छन्दसा'–इति, 'अन्तरिक्ष मसि'–इति च विशेषः। शेषं पूर्ववत्। निधेर्भूलोकात्मकत्वादुपरिनिहितमृत्पिण्डस्यान्तरिक्षलोकात्मकत्वम्। मन्त्रव्याख्यापकं ब्राह्मण मपि पूर्ववत्।

---

* का० श्रौ० सू० १६. ३. २६, २७क।

† का० श्रौ० सू० १६ ३ २७ख।

‡ धातुशब्दोऽन्त्यपर्य्याय एव। प्रथितस्य तलप्रान्तानुन्नीय ऊर्द्धान् गमयति, धातुं प्रथमपिण्डिकाम्' का० श्रौ० सू० वृ०।

§ वा० सं० ११ ५८ २।

"संलिप्येति । तां निषेकपरिनिहितां मृदं 'संलिप्य' सम्माज्यं 'संस्कृत्य' स्वस्थां स्थिरां कुर्यादित्यर्थः * ॥ ४ ॥

अथ प्रथमोद्देशुपरि अन्यमृत्पिण्डप्रक्षेपं समन्त्रं विधत्ते— "अथोत्तरं मृदि सादयातीति † ।

अथ तृतीयमन्त्र एव आम्नायते—

"आदित्यास्त्वा कृण्वन्तु जागतेनच्छन्दसाऽङ्गिरस्वद् ध्रुवासि द्यौरसि धारया मयि प्रजाएँ रायस्पोषं गौपत्यएँ सुवीर्यएँ सजातान् यजमानाय"–इति ‡ ।

अत्र आदित्या द्युलोकाभिमानिनो देवताः त्वा सुखां कुर्वन्तु । अत्र 'जागतेन छन्दसा'–इति, 'द्यौरसि'–इति च विशेषः । शेषं पूर्ववत् । प्रथमोद्देशान्तरिक्षात्मकत्वात् तस्योपरि विहितमृत्पिण्डस्य द्युलोकात्मकत्वम् ॥ ५ ॥

अथ निषेकद्वितयस्य च समीकरणं समन्त्रं विधत्ते— "अथैतेन चतुर्थेनेति § । उक्तमन्त्रत्रयापेक्षया अस्य यजुषश्चतुर्थत्वम् । 'वैश्वानराः' विश्वनरसम्बन्धिनो 'विश्वेदेवाः' त्वाम् 'आनुष्टुभेन छन्दसा' कुर्वन्ति । "दिशो हैतद्यजुरित्यादेरय मर्थः,— उखाया लोकत्रयात्मकत्वात् 'एतेन' 'यजुषा' समीकरणेन तस्या दिश एव निहितवत्यो भवन्ति ।

सोऽयं चतुर्थो मन्त्रः—

"विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्

---

* का० श्रौ० सू० १६ ३ २८ का ।
† का० श्रौ० सू० १६ ३ २८ ख ।
‡ वा० सं० ११ ५८. २ ।
§ का० श्रौ० सू० १६ ३ २९ ।

ध्रुवासि, दिशोऽसि धारया मयि प्रजाᳫं रायस्पोषं गौपत्यᳫं सुवीर्यᳫं सजातान् यजमानाय"—इति * ।

अत्र मन्त्रे 'आनुष्टुभेन छन्दसा'—इति, 'दिशोऽसि'—इति च विशेषः ॥ ६ ॥

पूर्वम् "अथैतेन चतुर्थेन यजुषा करोतीति क्रियासामान्य मुक्तम्, तद् विशिनष्टि— "तेनैतेनान्तरतश्च बाह्यतश्चेति । 'अन्तरतः' उखाहृदयस्य मध्यदेशे अपरिमितं छिद्रं कुर्यात्, 'बाह्यतः' अपि निम्नोन्नतत्वपरिहारेण सर्वतः समं कुर्यात् । एतस्य यजुषो दिगात्मकत्वात्, उखायाश्च लोकत्रयात्मकत्वात्, 'एतेन' अन्तरतो बाह्यतश्च समीकरणेन लोकत्रयस्य मध्ये बहिश्च 'अपरिमिता दिशः' निहितवान् भवति ॥ ७ ॥

उखाया ऊर्ध्वपरिमाणं विधत्ते— "तां प्रादेशमात्रीं मिमीते । एवकारेण परिमाणान्तरनिवृत्तिः । ऊर्ध्वा यथा प्रादेशमात्री, तिरश्चीनापि प्रादेशमात्री † । तिर्यक् प्रादेशमात्रीति निधिप्रथमसमये प्रागुक्तम् ‡ । ऊर्ध्वतिर्यक् समा कार्येत्यर्थः ।

तत्परिमाणं प्रशंसति— "प्रादेशेति । 'योनिं' गर्भसदृशीं कृतवान् भवति । उखाया योनित्वम् अन्याधारत्वात्, अग्नेश्च गर्भत्वम् तन्मध्ये संवत्सर मवस्थानात् ॥ ८ ॥

सर्वथोखा प्रादेशमात्री कर्तव्येत्याह— "सा यदीति । 'यदि' 'सा' उखा 'प्रादेशाद्' 'वर्षीयसी' अधिकपरिमाणा 'स्यात्', तर्हि 'एतेन' "विश्वे त्वा देवाः"—इति 'यजुषा' 'कृशीयसीम्' अधि-

---

* वा० सं० ११. ५८. ३ ।

† का० श्रौ० सू० १६. ३. २४ ।

‡ २६० पृ० १३ पं०, २६८ पृ० १ पं० द्रष्टव्ये ।

कांशं परिह्वत्य प्रादेशमात्री मेव कुर्यात् । 'यदि' उखा 'क्रमीयसी' स्यात्, 'एतेन' यजुषा तिर्यग् प्रादेशसम्मिता मेव कुर्यात् ॥ ८ ॥

उखायाः परिमाणं पशुनुष्ठानापेक्षया विकल्पित मिति दर्शयति— "स यद्येकः पशुः स्यादिति। एकपशुपक्षे एव प्रादेशमात्री उखा कर्त्तव्या; पञ्चपशुपक्षे पञ्चप्रादेशपरिमाणा, इषुमात्री वा कर्त्तव्या। एतत् परिमाणद्वयं तिर्यगपेक्षया; ऊर्ध्वपरिमाणं तत्रापि एकप्रादेशमात्रीति। तथा च कात्यायनेन सूत्रितम्— "प्रादेशमात्रीं तिर्यगूर्ध्वं च, पञ्चप्रादेशां मिषुमात्रीं वा तिर्यक् पञ्चपशौ"—इति *। तिर्यगेव पञ्चपशुपक्षे परिमाणद्वयम्, ऊर्ध्वन्तु एकप्रादेशैवेत्यर्थः ॥ १० ॥

मथोखाया उत्तरभागे वर्त्तिकरणं विधत्ते— "अथ तिरश्चीमिति †। 'पर्यस्यति' परितः सर्वतः कुर्यात्। तां रास्नां दिगात्मना स्तौति— "एतद्वै देवा इत्यादिना। पूर्वं 'देवाः' यथा 'उखां कृत्वा' 'दिग्भिः' दृढा मकुर्वन्, एवं यष्टा वर्त्तिकरणेन दिग्भिरेव विरतां दृढाञ्च कृतवान् भवति ॥ ११ ॥

रास्नाकरणस्य स्थानं विधत्ते—"तां मुत्तरे विततीय इति ‡। उखां त्रिधा विभज्य 'उत्तरे' पर्वे 'विततीये' तृतीयभागादप्यूर्ध्वे प्रदेशे उखाकण्ठप्रदेशे वर्त्तिं सर्वतः तिरश्चीनां कुर्यादित्यर्थः ॥ १२ ॥

मन्त्रं विधत्ते— "अदित्यै रास्नासीति §। है वर्त्ते। 'अदित्यै'

---

* का० श्रौ० सू० १६. ३. २४, २५।
† का० श्रौ० सू० १६. ३. २०।
‡ का० श्रौ० सू० १६. ३. २० ख।
§ वा० सं० ११ ५६. १।

प्रदीनाया देवमातुः 'रास्ना' रशना 'असि' 'इति'। रास्ना-पदस्याभिप्रायमाह— "वरुण्या वै यत्र इति। भागस्य वरुणो देवतेति प्रागुक्तम् *; रास्ना 'अवरुध्या' पाशात्मत्वात् ॥ १३ ॥

अन्यायतस्रो वर्त्तीर्विधत्ते— "अथ चतस्र ऊर्ध्वा इति। 'तूष्णीम्'-इति मन्त्रप्रतिषेधः। एताः वर्त्तयः उखायाश्चतुर्दिशं कार्याः। तथाच सूत्रम्— "ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रो-ऽपरा वर्त्तीः प्राप्ताः"-इति †। कण्ठगतवर्त्तिपर्यन्तं प्रतिदिशं चतस्रः तूष्णीं कार्या इत्यर्थः। रास्नाचतुष्टयं दिगात्मना स्तूयते— "दिशो वै ता इत्यादिना। ऊर्ध्वानां चतसृणां वर्त्तीयोत्तर-प्रान्तरास्नापर्यन्तम् ॥ १४ ॥

तां विधत्ते— "ता एता एतस्यै भवन्तीति। "तद्यदत्र सर्व-मिति। उपरवर्त्तिकरणेन यतो लोका ऊर्ध्वमितं सर्वं दृढं भवति। उखाया लोकत्रयात्मकत्वात् दार्ढ्यार्थं वर्त्तयः कर्त्तव्या इति तात्पर्यम् ॥ १५ ॥

अधोर्ध्ववर्त्तीना मध्ये स्तनोन्नयनं विधत्ते— "अष्टा मध्येषु स्तनाविति ‡। स्तना इव 'स्तनाः', तदाकाराः कुर्यादित्यर्थः। "एतद्वै देवा इत्यादेः कण्डिकाशेषस्यायमर्थः,— पूर्वे देवा लोकत्रयात्मिकां गोरूपां सुखां कृत्वा तस्याः अधःस्थानीयायाः विहृतीयभागे कृतायास्तिरश्चीनाया रास्नायाः समीपे वर्त्तिरास्ना-येषु चतुरः स्तनान् कृत्वा, तेभ्यः सर्वान् कामान् दुग्धवन्तः,

* पुरस्तात् (२ भा० २७२ पृ० ३ पं०) द्रष्टव्यम्।
† का० श्रौ० सू० १६. ३. ३१।
‡ का० श्रौ० सू० १६ ४ १।

तथायं यष्टाऽपि स्वाभिलषितान् कामान् दोग्धुं चतुरः स्तनान् कुर्यादिति । गोरूपोऽपि वितृतीयभागे भवति, सापि गौश्चतुस्तनीति तत्साम्यम् ॥ १६, १७, १८ ॥

चतुस्स्तनपक्षं सिद्धान्तयितुं शाखान्तरानुसारेण पक्षान्तर मनुवदति— "तां हैक इति *। तथाच तैत्तिरीयाः— "द्वि-स्तनां करोति द्यावापृथिव्योर्दोहाय, चतुस्तनां करोति पशूनां दोहाय, अष्टस्तनां करोति छन्दसां दोहाय"—इति †। द्विस्तनपक्षे एकस्मिन्नेव पार्श्वे क्रियते स्तनद्वयम्, अष्टस्तनपक्षे एकैकस्मिन् पार्श्वे द्वौ द्वाविति। तत्पक्षद्वयं दूषयति— "न तथा कुर्यादिति। 'ये' पशवो 'गोः' पशोरपेक्षया 'कनीय-स्तनाः' अल्पस्तनाः, 'ये' च 'भूयस्तनाः'; अल्पभूयस्त्वे गवा-पेक्षयेति बहुं गोरित्युक्तम्। सा हि चतुस्तना। स्तनचतुष्टया-दर्वाक्स्तना भूयस्तना वा ये पशवः, ते 'अनुपजीवनीयाः' अभोग्याः भवन्ति। यदि 'एनाम्' वेदीं द्विस्तनां अष्टस्तनां वा कुर्यात्, तर्हि अनुपजीवनीयां भोगानर्हामेव कुर्युः, न तु तां भोग्याम्। अभोग्यामेव दर्शयति— "शुनी मिति। अष्ट-स्तनकरणे 'शुनीं' शुनः स्त्रियम्, द्विस्तनकरणे 'अविं वडवां वा' कृतवन्तो भवन्ति। ता यथा भोग्या न भवन्ति, एवं द्विस्तना अष्टस्तना वा वेदी न भोगार्हेति तथाकरण मयुक्त मित्यर्थः ॥ १९ ॥

विधत्ते— "अथास्यै बिल मिति ‡। 'बिलं' कण्ठविवरम्

'अभिमृशति' स्पृशति । मन्त्रं विधत्ते— "अदितिष्टे इति * । 'ते' 'बिलम्' अदितिः गृभ्णातु । स्पष्टोऽर्थः † । अदितेर्वाग्रूपत्वेन स्तूयते— "वाग् वा अदितिरिति । "निष्ठापयतीति । निष्ठितां परिसमाप्तां करोति ॥ २० ॥

उखाभिधाने समन्त्रं विधत्ते— "तां परिगृह्णेति ‡ । 'परिगृह्य' इष्टां गृहीत्वा निदध्यात् 'ताम्' उखाम् ।

मन्त्रस्यायमर्थः,— 'सा' अदितिः 'मही' भूरूपां महतीं वा 'मृन्मयीं' मृद्विकारभूताम् 'अग्नये' अग्न्यर्थं 'योनिं' स्थानम् उखां 'कृत्वाय' "क्त्वो यक्" § कृत्वा 'पुत्रेभ्यः' प्रयच्छतु , पक्वां कुर्वन्तु इति । अतो हेतोः 'अदितिः स्वपुत्रेभ्यो देवेभ्यः' प्रायच्छदिति सम्बन्धः । यच्छते. पञ्चमलकारे रूपम् ॥

मन्त्रं प्रतिपाद्य समूह्य व्याचष्टे— "कृत्वाय सा महीमुखामिति ॥ २१ ॥

उखा एकैव करणीयेति सिद्धान्तयितुं केषाञ्चित् पक्षं सोपपत्तिकमनुवदति— "ता हैके तिस्रः कुर्वन्तीति ¶ । 'ताः' उखाः, 'एके' आचार्याः 'तिस्रः' कुर्वन्ति । तत्र युक्तिः— "त्रयो वा इमे लोका इति । उखाः खलु लोकात्मिकाः, 'लोकाः' च 'त्रयः' ; अतो लोकसङ्ख्यया उखाः कर्त्तव्याः. 'इति' 'वदन्तः'

---

* वा० सं० ११ ५९. २ ।
† पा० ८. ३. ३९ सू० १ वा० ।
‡ का० श्रौ० सू० १६ ४ ४ ।
§ पा० सू० ७ १. [illegible] ।
‖ वा० सं० ११ ५९ ३ ।
¶ का० श्रौ० सू० १६ ४ ५ ।

एते तिस्रः कुर्वन्तीति सम्बन्धः। युक्त्यन्तर माह—"अथो अन्योऽन्यस्या इति। यदि एका भिद्येत, तर्हि अन्यस्यां अग्निं भरिष्यामः। "यद्युत्तराचेत्तरस्या मिति। अतोऽन्योऽन्यस्यै प्रायश्चित्त्यै तिस्र उखाः कर्त्तव्या इत्यर्थः।

तं पक्षं दूषयति— "यो वा एष निधिरित्यादिना। निधिरेकः, कहिहयश्च, भूर्लोकादि त्रयम्; दिशश्च सर्वं जगत्; न ततोऽतिरिक्त मस्ति। अतो लोकत्रयात्मिकायां मुखायां ज्ञातायाम् *, 'यद्' यदि अन्यदुखादयम् 'उपाहरेत्' सम्पादयेत्, तर्हि 'तत्' लोकादिकम् अति-'रेचयेत्'; 'यद् यज्ञे ऽतिरिक्तं क्रियते', 'तत्' अतिरिक्तं कर्म 'यजमानस्य द्विषन्तम् एवातिरेचितवान् भवति। यतो न्यून मतिरिक्तञ्च कर्मदोषावहमेव; अतो न्यूनाधिकदोषौ परिहार्यौ। तस्मात् लोकत्रयात् दिग्भ्यश्चातिरिक्तस्य वस्तुनः करणं न युक्त मिति तात्पर्यम्।

यद्युखैका स्यात्, सा यदि भिद्येत, तर्हि किं मन्यकरणं तूष्णीं मावस्थानम्? प्रकरणे च कथ मुख्याग्निधारणम्, असत्यग्निधारणे कथं चयनाख्यं कर्म सेत्स्यतीत्याशङ्का, तस्य सर्वस्योत्तरं ब्राह्मणे वक्ष्यत इत्याह— "यदु भिद्येत प्रायश्चित्तिः, उत्तरस्मिन् तदन्वाख्यान इति। 'अन्वाख्याने' ब्राह्मणे

---

* "अथोखा मासि द्यौरसि पृथिव्यसीति। उपस्तौत्येवैना मेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति"—इत्येतस्य सायणीयं भाष्य मिदम्— 'अध्वर्युः समन्त्रकं व्याख्यानं विधत्ते— "अथोखा मिति। उखाया द्युपृथिव्यात्मकत्वस्य कदाचिदप्यसम्भवात् उपस्तुतिमात्र मिद मित्याह— "उपस्तौत्येवेति। साऽपि किमर्थमत आह— "महयत्येवेति। स्तुत्या पूजनं लोके प्रसिद्धम्"—इति १ भा० ४१० पृ० १पं०

तस्य,, वचनम् इति। तत्र श्रौतम्— "यद्येकोखा भिद्येत, याभिन्ना तया स्यात्सुरविनी स्यात्, तस्यां मैनं पर्यावपेत्"— इत्यादि * ॥ २२ ॥ ७ [ ५. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति षष्ठकाण्डे तृतीयः प्रपाठकः समाप्तः † ॥

---

* उत्तरत्र ( ६ अ० ४ ब्रा० ८ क० ) द्रष्टव्यम्।

† एतदुपरि लिखितं 'कण्डिकाः ११४'—इति क, 'कण्डिकासंख्या ११४'—इति ख, ग, घ। तत्र १ ब्रा० २६ क०, २ ब्रा० १२ क०, ३ ब्रा० १० क०, ४ ब्रा० १० क०, ५ ब्रा० २२ क०, ६ ब्रा० १२ क०, ७ ब्रा० २२ क०। यस्यास्तां सङ्कलनयास्मिन् प्रपाठके सप्तसु ब्राह्मणेषु ११४ कण्डिकाः सम्पद्यन्ते इति भ्रम् ॥

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ,
अपि वा
षष्ठमाध्याये तृतीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

तस्या एतस्या अषाढां पूर्व्वां करोति। इयं वा ऽअषाढेयं ह वा ऽएषां लोकानां प्रथमासृज्यत तामेतस्या एव मृदः करोत्येषा ह्येव लोकानामियं महिषी करोति महिषी हीयं तद्यैव प्रथमा व्वित्ता सा महिषी ॥ १ ॥

पादमात्री भवति। प्रतिष्ठा वै पाद इयमु वै प्रतिष्ठा ऽनालिखिता भवति विवृद्धीयम्* ॥ २ ॥

अथोखां करोति। इमांस्तल्लोकान् करोत्यथ व्विश्वज्योतिषः करोत्येता देवता अग्निं व्वायुमादित्यमेता ह्येव देवता व्विश्वं ज्योतिस्ता

* 'विरुद्धीयम्'—इति ग, घ।

एतस्या एव मृदः करोत्येभ्यस्तल्लोकेभ्य एतान् देवान्निर्मिमीते यजमानः करोति त्र्यालिखिता भवन्ति त्रिवृतो ह्येते देवा ह्यध्यधिदेवतम् * ॥ ३ ॥

अथाध्यात्मम्। आत्मैवोखा वागषाढ़ा तां पूर्व्वां करोति पुरस्ताद्धीय मात्मनो वागस्मा मेतस्या एव मृदः करोत्यात्मनो ह्येवेयं वागध्यायीं करोति सहियी हि वाक् त्र्यालिखिता भवति त्रेधाविहिता हि वागृचो यजूंषि सामान्ययो ग्रहिष्टं सर्वं वाचो रूप सुपाण्ड्य व्यन्तरा सुवैः † ॥ ४ ॥

अथोखां करोति। आत्मानं तत् करोत्यथ विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजनन मेवैतत् करोति ता एतस्या एव मृदः करोत्यात्मनस्तत् प्रजां निर्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति

* '०दैवतम्'—इति ग, घ।

† 'सुवैः'—इति ग, घ।

न्यालिखिता भवन्ति त्रिवृद्धि: प्रजाति: पिता माता पुत्रोऽथो गर्भ उल्वं जरायु ॥ ५ ॥

ता एता यजुष्कृतायै करोति । अयजुष्कृताया ऽइतरा निरुक्ता एता भवन्त्यनिरुक्ता इतरा: परिमिता एता भवन्त्यपरिमिता इतरा: ॥ ६ ॥

प्रजापतिरेषोऽग्नि: । उभयम्वेतत् प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ या अयजुष्कृतायै यदेवास्यानिरुक्त मपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति य एवं विद्वानेतदेवं करोत्ययोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य: * ॥ ७ ॥

अथैनां धूपयति । श्लेम्ने न्वेवायो कर्मण: प्रकृततायै यदेव धूपयति शिर एतद्यज्ञस्य यदुखा प्राणो धूम: शीर्षंस्तत् प्राणं दधाति ॥ ८ ॥

अश्वशकैर्धूपयति । प्राजापत्यो वा ऽअश्व:

---

* 'प्रायश्चित्तिभ्य: – इति क , ख ।

प्रजापतिरग्निर्वा षा आत्मानमात्मन् हिनस्त्यदिए-
साये तद्वै शक्तैव राति सर्वं यातयाम तथो ह
नैषाऽग्नवद् हिनस्ति नेतरान् पशून् * ॥ ९ ॥

वसवस्त्वा धूपयन्तु। गायत्रेणच्छन्दसाङ्गि-
रस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेनच्छन्दसाङ्गिरस्वदा-
दित्यास्त्वा धूपयन्तु जागतेनच्छन्दसाङ्गिरस्वद् विश्वे
त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेनच्छन्दसाङ्गि-
रस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा
धूपयत्वित्येताभिरेवैनामेतद्देवताभिर्धूपयति † ॥ १० ॥

सप्ताश्वशफानि भवन्ति। सप्त यजूंषि सप्त-
तय्य एता देवताः सप्त शीर्षन् प्राणा यद्‌ वा
ऽपि बहु कृत्वः सप्त-सप्त सप्तैव तच्छीर्षण्येव
तत् सप्त प्राणान् दधाति ॥ ११ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [पृ. ३.]॥

* 'पशून्'—इति ग, घ।

† अत्र 'गायत्रेणच्छन्दसा' 'त्रैष्टुभेनच्छन्दसा', 'जागतेनच्छन्दसा', 'आनुष्टुभेनच्छन्दसा'—इत्येवं पाठेन भवितव्यम् "हि च"—इति (६. १. ७३) पाणिनिशासनात्, सम्प्रत्यत्र संहितेति। पूर्वेणाप्येव बोध्यम् (२६०, २६१, २६२पृ०)।

अथ संस्कृताया मृदः सकाशात् उखानिर्माणात् पूर्वम् अषाढाख्येष्टकाया निर्माणमाह—"तस्या एतस्या अषाढां पूर्वां करोतीति* । 'अषाढां' अषाढाल्लिङ्गकमन्त्रोपधेयामिष्टकाम् । "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः"–इति † मतोर्लुक् । 'पूर्वाम्' उखातः पूर्वभाविनीं कुर्यात् । पूर्वभावित्वमर्थवादमुखेन दर्शयति— "इयं वा अषाढेति । 'अषाढा'–इति या अस्ति, सा 'इयम् वै' पृथिवी खलु ; तद्विकारत्वात् । अस्त्वेवम् , प्राथम्ये किं स्यादित्यत आह— "इयं उ वा एषां लोकानां प्रथमासृज्यतेति । पृथिव्या इतरलोकापेक्षया प्राथम्यं प्रसिद्धम् । अस्या मृदन्तरप्रकृतित्वप्रसक्तिं वारयति— "ता मेतस्या एवेति । 'एतस्याः' उक्तसंस्कारोपेताया मृदः सकाशादित्यर्थः । तत्रोपपत्तिमाह— "एषां ह्येव लोकानामियमिति । यतः 'इयम्' 'एषां' प्रसिद्धानां लोकानां सम्बन्धिनी, अत इत्यर्थः । अयमभिप्रायः,— उखाया लोकत्रयात्मकत्वेन प्रतिपादनात् तस्या या प्रकृतिभूता मृत् , तदीयाया अषाढाया अपि निर्मितिः तस्यैव तदीयत्वं भवतीति ।

अस्या उखावद् यजमानकर्तृत्वं प्राप्तमित्याह— "महिषी करोतीति । प्रथमोढा स्त्री महिषी, 'इयम्' इष्टकापि 'हि' यस्मात् 'महिषी' ; प्रथमतो निर्माणात् , अतोऽस्यां महिषीकर्त्तव्यता युक्ता । भवत्वेवं यद्येषा महिषी स्यात् , सैव कुत इत्यत आह— "तद् यैव प्रथमा वित्ता, सा महिषीति । 'वित्ता' लब्धा ॥ १ ॥

---

* का० श्रौ० सू० १६. ४. ६ ।
† पा० सू० ४. ४. १२५ ।

मृदा इयत्ता माह— "पादमात्री भवतीति । अत्र महिषी-शब्दस्य कर्तृत्वेन सम्बन्धात् तत्पादमात्रीति न मन्तव्यम्; सूत्रकारेण यजमानपादमात्रीति विशेषितत्वात् * । उक्तमर्थं प्रशंसति— "प्रतिष्ठा वै पाद इय मु वै प्रतिष्ठेति । पादाभावे गमनदर्शनात् पादस्य प्रतिष्ठात्वम् । इयं पृथिवी सर्वाधारत्वात् प्रतिष्ठा, तत्तद्विकारभूताया अपीष्टकायाः प्रतिष्ठात्मकपादप्रमाणत्वं युक्त मित्यर्थः । अषाढादिष्टकात्वेन उक्ताया यं कर्तव्य मिति विधत्ते— "त्र्यालिखिता भवति त्रिवृदीव मिति । अर्धचन्द्राकाराभिः तिसृभिः रेखाभिर्युक्ता भवेत् । 'त्रि'-शब्देन "त्रयो वा इमे त्रिवृतो लोकाः"-इत्यादि † श्रुत्यन्तरप्रसिद्धिः द्योतिता । त्र्यालिखितत्वं पृथ्व्यप्तेजोभिस्त्रिवृत्करणाद्वा, त्रिकलाकारिकायामायोत्तिभिः संस्तवत्वाद्वा द्रष्टव्यम् । अत्र सूत्रम्— "अषाढां करोति महिषी प्रथमविधां तदाख्यां, यजमानपादमात्रीं त्र्यालिखिताम्"-इति ‡ ॥ २ ॥

तस्याः अषाढानामकसंज्ञता माह— "अषाढेति । 'अथ' अषाढानन्तरम् 'उखां' मातृरूपया स्त्र्येव प्रयात् कुर्यात् । सर्वोत्पादकरूपेणेमां श्रीलोकान् जनयन् भवति । "यजमान उखां करोति मृद माददायेत्यादि § सूत्रम् ॥

अथ विश्वज्योतिर्नामधेयानां तिसृणा मिष्टकानां मुखानन्तर-

---

* "यजमानपादमात्रीं त्र्यालिखिताम्"—इति का० श्रौ० सू० १६. १. २२ । 'महिषीपादमात्री माभूदिति यजमानग्रहणम्'—इति तत्र वृत्तिः ।

† ऐ० ब्रा० ३. २. ३ द्रष्टव्यम् ।

‡ का० श्रौ० सू० १६. १. २१, २२ ।

§ का० श्रौ० सू० १६. १. २३ ।

कर्त्तव्यतां विधत्ते— "अथ विश्वज्योतिषः करोतीति *। पूर्व-वदेतस्मिन्नर्थे संख्येयपरत्वात् विश्वज्योतिषमासां द्रष्टव्यम्। एतासां निर्माण मेवाग्निवाय्वादित्यानां निर्माण मित्याह— "एता देवता अग्निं वायु मादित्य मेता ह्येव देवता विश्वं ज्योति-रिति। 'एता देवताः' इत्यस्य व्याख्यानम्— 'अग्निम्, वायुम्, आदित्यम्'-इति। विश्वद्योतकस्य सन्व्यादीनां प्रसिद्ध मिति 'हि'-शब्दो द्योतयति। पूर्ववदासां सम्युक्तार्थे संस्कृतमित्येव करण मित्याह— "ता एतस्या एव सदः करोतीति। एतत् प्रशंसति— "एभ्यस्तल्लोकेभ्य एतान् देवान् निर्मिमीत इति। तल्लोकात्मकलोकत्वात् तदनन्तरं तदीयसदः आसां निर्माण मेव तदधिष्ठातृदेवतानिर्मित मित्यर्थः। "यजमानः करोतीति, "वशाभिषिक्ता भवन्तीति † वाक्यद्वयं स्पष्टम्।

देवानां विहृतं पृथुभूम्यन्तरिक्ष्याभीरेव, "इष्टकासु तिस्रो विश्वज्योतिषः पृथगुत्तमापाञ्चाभिन्विताः"-इति ‡ सूत्रम्। पृथगुत्तमाभिधानम्, द्वितीयतृतीययोः क्रमपरिहारार्थम्; तेन क्रमेणोपधानं यथा स्यादिति। "इत्यधिदैवत मिति। 'इति'-शब्दः प्रतिपादितप्रकारवचनः। 'अधिदैवतम्' देवता अधिकृत्य प्रवृत्तम्, उक्त मित्यर्थः॥ २॥

'अथ' अनन्तरम्, 'अध्यात्मम्' आत्मानं अधिकृत्य प्रवर्त्य-मानम्, 'उच्यते'-इति शेषः। प्रतिज्ञातं अर्थं दर्शयति— "आत्मैवोखा वागपाठति। उखायाः प्राधान्यादात्मत्वम्। प्राधा-

---

* का० श्रौ० सू० १६ ४ ६।
† २०८ पृ० २ पं० द्रष्टव्यम्।
‡ का० श्रौ० सू० १६ ४ ६ (तु शब्दस्यार्थे)।

"प्रजापतिरेषोऽग्निरिति । 'एषः' चयनलक्षणः 'अग्निः' 'प्रजापतिः' सर्वभूतात्मको विराट् । 'निरुक्तं' कार्यात्मना स्थितम्, 'अनिरुक्तं' कारणात्मना वर्त्तमानमिति विवेकः । यन्निरुक्तानिरुक्तात्मकत्वम् 'उभयम्' अस्ति, तद् इदं प्रजापतिरेव । 'तत्' तथा सति यजुष्कृतीत्यमानि प्रजापतेः 'यत् निरुक्तं रूपम्', तत् कार्यात्मकं 'परिमितम्', तत् संस्कृतवान् भवति । अतथाभूताभिरिष्टकाभिरतथाभूतं प्रजापतेः रूपं संस्करोति । एवं विद्वान् निरुक्तानिरुक्तरूप मुभयं जानन् संस्कर्त्ता भवति ।

अवशिष्टाया मृदो विनियोग माह— "अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य इति । पक्वां कृत्वा यजमान इति शेषः । उपशेते इति 'उपशया' मृदुच्यते * । 'प्रायश्चित्तिभ्यः' उखाभेदपरिहारोपायाः, तदर्थ मित्यर्थः ॥ ७ ॥

यदुक्तं सूत्रकृता— "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीमेरेकैकेन वसवस्त्वेति प्रति मन्त्र मिति †, तदिदं विधाय प्रशंसति— "अथैनां धूपयति श्लेम्ने न्वेवेति । 'श्लेम्ने न्वेव' स्थिरत्वायैव, न केवलं दृष्टार्थम् । 'अथो' अपि च 'कर्मणः' उख्याधारभूतस्य चयनस्य वा 'प्रकृततायै' संस्कृतत्वसिद्धये । "यद्देवेत्यादि", धूपनार्थवादः । उखायाः प्राधान्यात् शिरस्त्वाभिधानम् । नासारन्ध्रेण प्राणस्य सञ्चारवत् ° ° ° धूम-सञ्चारदर्शनात् प्राणत्वोपचारः ॥ ८ ॥

"अश्वशकैर्धूपयतीति । धूपनकर्म चाश्वशकृद्भिरेव भवितव्य मिति नियमे कारण माह— "प्राजापत्यो वा अश्व इत्यादिना ।

---

* का॰ श्रौ॰ सू॰ १६ ४ ७ ।

† का॰ श्रौ॰ सू॰ १६ ४ ८ ।

द्वारेण * व्याख्येयम्। "विश्वे त्वा देवा वैश्वानरा इति, चतुर्थमन्त्रे † विश्वेषां देवानां सर्वदेवात्मकत्वाद् अनुष्टुभश्च सर्वच्छन्दोरूपत्वात् परस्परसम्बन्धः। विश्वे च ते नराश्च 'विश्वेनराः', तेषां हितकारित्वेन सम्बन्धिनो 'वैश्वानराः'। इन्द्रवरुणविष्णूनां प्रतिनियतच्छन्दस्सम्बन्धाभावात् केवला एवाम्नाताः ‡। "एताभिरेवैना एतद्देवताभिर्धूपयतीति। 'एतत्' एतेन, वस्वादिमन्त्रधूपनेन 'एताभिः' सप्तदेवताभिः § एव धूपनं कारितवान् भवति ‖ ॥ १० ॥

सप्तानां मन्त्रदेवतानां यत् सप्तसङ्ख्यासाम्यम्, तत् प्रशंसति— "सप्ताक्षप्रकानि भवन्तीति। सङ्ख्यागतसप्तत्वेषु त्रित्वं प्रशंसति— "यद्दु वा अपि बहुकृत्वः सप्त-सप्तेति। 'उ' अपि च, यदपि तत्र प्रकृत मिदं सप्तकम्, मन्त्रगतञ्चापरम्, देवतागतं चान्यत्। एवं 'बहुकृत्वः' सप्तसङ्ख्याया आम्नाताया अपि सप्तसङ्ख्यानतिरेकात् त्रिभिः सप्तभिः 'शीर्षण्येव' व्याख्ये यज्ञशिरस्येव 'सप्त प्राणान्' 'दधाति' स्थापयति ॥ ११ ॥ १ [ ५. ३. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

* विशेषतस्तत्र २६६ पृ० द्रष्टव्यम्।

† वा० सं० ११ कं० ४। ‡ वा० सं० ११. कं० ५, ६, ७।

§ वसवः, रुद्राः, आदित्याः, वैश्वानराः, इन्द्रः, वरुणः, विष्णुश्चेति सप्त देवाः वा० सं० ११. ६० कण्डा माम्नाताः।

‖ इहैव पूर्वम् २६८ पृष्ठतः २७१ पृष्ठान्तं द्रष्टव्यम्।

ऽइति देवानाᳩ हैता मग्ने पत्नीर्देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वद्दधुस्ताभिरेवैना मेतद्दधाति ता ह ता ओषधय एवौषधयो वै देवानां पत्न्य ओषधिभिर्हीदᳩ सर्व्वᳩ हित मोषधिभिरेवैना मेतद्दधात्यथ व्विश्वज्योतिषो ऽवदधाति तूष्णी मेवाथ पचन मवधायाभीन्द्धे ॥ ४ ॥

धिषणास्त्वा देवीः । व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वदभीन्धता मुख ऽइति धिषणा हैता मग्ने देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीधिरे ताभिरेवैना मेतदभीन्द्धे सा ह सा व्वागेव व्वाग्वै धिषणा व्वाचा हीदᳩ सर्व्वं मिद्धं व्वाचैवैना मेतदभीन्द्धे ऽथैतानि त्रीणि यजूᳩषीक्षमाण एव जपति ॥ ५ ॥

व्वरूत्रीष्ट्वा देवीः । व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वच्छ्रपयन्तूख ऽइति व्वरूत्रीर्हैता मग्ने देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैना मेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहोरात्राणि वै व्वरूत्रयोऽहोराचै-

र्वीदꣳ सर्व्वं ह्येत महोरात्रैरेवैना मेतच्छ्रपयति ॥ ६ ॥

ग्नास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति ग्ना हैता मये देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि छन्दाꣳस्येव छन्दाꣳसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति छन्दोभिरेवैना मेतत् पचति ॥ ७ ॥

जनयस्त्वाच्छिन्नपत्रा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति जनयो हैता मये ऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषा मेतानि ज्योतीꣳषि नक्षत्रैरेवैना मेतत् पचति ॥ ८ ॥

स वै खनत्येकेन । अवदधात्येकेनाभीन्धऽएकेन श्रपयत्येकेन द्वाभ्यां पचति तस्माद् द्विः संवत्सरस्यान्नं पच्यते तानि षट् सम्पद्यन्ते षड्ऋतवः

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति * ॥ ९ ॥

अथ मित्रस्य चर्षणीधृत इति। मैत्रेण यजुषोपन्याचरति यावत् किंयच्चोपन्याचरति न वै मित्रः † कञ्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष एतां न हिनस्ति नो ऽएतं मेषा तां द्विवेवोपवपेद्विवोद्वपेद्दृव्याग्नेयम् ‡ ॥ १० ॥

ताᳪ सावित्रेण यजुषोद्वपति। सविता वै प्रसविता सवितृप्रसूत एवैना मेतदुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्येति सर्व्वं मु च्येतत् सविता § ॥ ११ ॥

अथैना मुपावर्त्तयति। अव्यथमाना पृथिव्या माशा दिश आपृणेत्यव्यथमाना त्वं पृथिव्या माशा दिशो वसैनापूरयेत्येतत् ‖ ॥ १२ ॥

---

* भवति'—इति ख।
† 'मित्र'—इति ग, घ।
‡ '०ग्नेयम्'—इति ग, घ।
§ सविता'—इति ग, घ।
‖ '०तत्'—इति ग, घ।

अथैना मुद्यच्छति । उत्थाय बृहती भवेत्युत्थाय ह्मीमे लोका बृहन्त उर्द्ध तिष्ठ ध्रुवा त्व मित्यूर्द्ध तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् * ॥ १३ ॥

तां परिगृह्य निदधाति । मित्रैतां त ऽउखां परिददाम्यभित्त्या ऽएषा मा भेदीत्ययं वै वायुर्मित्रो यो ऽयं पवते तस्मा ऽएवैना मेतत् परिददाति गुप्त्यै ते ह्मेमे लोका मित्रगुप्तास्तस्मादेषां लोकानां न किञ्चन मीयते † ॥ १४ ॥

अथैना माच्छृणत्ति । क्षेम्यै न्वेवाथो पर्णकषाय-पक्वतायै यद्देवाच्छृणत्ति शिर एतद्यज्ञस्य यदुखा प्राणः पयः शीर्षंस्तत् प्राणं दधात्यथो योषा वा ऽउखा योषायां तत् पयो दधाति तस्माद्योषायां पयः ॥ १५ ॥

अजायै पयसाच्छृणत्ति । प्रजापतेर्व्वै शोकादजा समभवत् प्रजापतिरग्निर्नो वा ऽआत्मात्मानं हिनस्त्यहिंसायै यद्देवाजाया ऽअजा ह

* '०तत्'—इति ग, घ ।
† 'मीयते'—इति क, ग ।

सर्व्वा ओषधीरत्ति सर्व्वासा मेवैना मेतदोषधीनाᳪ रसेनाच्छृणत्ति ॥ १६ ॥

व्वसवस्त्वाच्छृन्दन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा व्वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदित्येताभिरेवैना मेतद्देवताभिराच्छृणत्ति स वै याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति यो व्वाव कर्म करोति स एव तस्योपचारं व्वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति ॥ १७ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [पु. ४.] ॥

अथावटे खननं विधत्ते— "अर्धेन मख्या खनतीति *। 'एनम्' अवटम् 'अध्या' पृथिव्याम् उखास्थापनार्थं खनेत्। अवटखननं पुरावृत्तान्ताभिधानमुखेन प्रशंसति— "एतद्वै देवा अबिभयुरिति। 'एतत्' एतेन वक्ष्यमाणेन खलु 'देवाः' भीताः आसन्; 'नः' अस्माकं सम्बन्धिनम् 'इमम्' उखेष्टकारूपं पदार्थं 'नाष्ट्रा' नाशकारीणि रक्षांसि 'न हन्युः' हननं न

* का० श्रौ० सू० १६ ४. ६ ।

कुर्युरिति। यद्देतदस्ति, 'एतत्' एतेन पूर्वसान्वयः। 'तथो' अवयवभूताय उखादिपदार्थाय 'इमां' पृथिवीम् 'एव' 'आत्मानम्' अवयविनम् 'अकुर्वन्'। एवं कुर्वता अभिप्राय माह— "आत्मानं गोपायतीति। यथात्मभूत मह्यं स्वयं रक्षति, तथा रक्षिष्यतीति तेषा माशयः ॥ १ ॥

खननं मन्त्रं विधत्ते— "तं वा अदित्या खनतीति। 'अदित्या' अदितिदेवतात्मकेन मन्त्रेणेत्यर्थः। अन्वयव्यतिरेकाभ्या मदितिः खनति नान्येति दर्शयति— "इयं वा अदितिरित्यादिना। येयम् 'अदितिः' देवता, सा 'इयं वै' पृथिवी खलु। आदत्ते सर्वं मित्यदितिरिति व्युत्पत्तेः। स्पष्ट मन्यत्। यथा पादतल-मग्नकण्टकाद्युद्धरणादिषु स्वयं चेत् न हिनस्ति, अन्यश्चेत् हिंस्यात्; एव मिति भावः ॥ २ ॥

मन्त्रं दर्शयति— "अदितिष्ट्वा देवीति *। अय मर्थः— हे अवट। 'त्वा' त्वाम् 'अदितिः' अदीना 'देवी' खनतु। कीदृशी? 'विश्वदेव्यावती' विश्वेषां देवानां हितं कर्म विश्वदेव्यम्, तदस्यास्तीति † विश्वदेव्यावती। "मन्त्रे सोमाश्वेन्द्रिय-विश्वदेव्यस्य मतौ"-इति दीर्घः ‡। किं तत्? 'अङ्गिरस्वत्' अङ्गिरसो यथा तथा। कुत्र? 'पृथिव्याः' 'सधस्थे' सहस्थाने उपरीत्यर्थः। 'इति'-शब्दो मन्त्रसमाप्त्यर्थ इति ॥

"अवटो वै देवतेति। 'एषः अवटः' 'देवता' देवम् अग्निं प्रति साधुः; इष्टकोपादानकत्वात्। अवटखननसाधनम्, उक्तार्थ-

* वा० सं० ११.६१.१ ।
† पा० सू० ५. २. ९४ ।
‡ पा० सू० ६. ३. १३१ ।

मृत्खननार्थं प्रागाहृता वैणव्यभ्रिरेवेत्याह— "अत्र सा वैणव्यभ्रिरुत्सीदतीति। 'अत्र' अवटखनने यैव पूर्वं भृता 'वैणवी' वेणुविकारभूता 'अभ्रिः', 'सा' 'उत्सीदति' विनश्यति, कृतप्रयोजना भवतीत्यर्थः। अवटस्य प्रकारविशेषमाह— "चतुःस्रक्तिरेव कूपो भवतीति। "चतस्रो वै दिशः"-इत्यर्थवादः स्पष्टः। "अभ्रया श्वभ्रं चतुरस्रं खनत्यदितिष्टेति"-इति कात्यायनः * ॥

अथ यदुक्तं सूत्रकृता— "अपश्च मास्तीर्य यथाहृतमवदधाति, देवानाम्त्वेत्युखां न्युप्ताम्"-इति †, तदिदं विधत्ते— "अथ पचन मिति। पच्यतेऽनेनेति पचनं तृणादिकम्, तत् 'अवधाय' अवटे आस्तीर्य, आदौ निष्पादितत्वात् प्रथमम् 'अषाढाम् एव' तूष्णीं स्थापयेत् ॥ २ ॥

"अथोखा मवदधातीति। अथ उखां "देवानां त्वा पत्नी."-इति ‡ मन्त्रेण अवाङ्मुखीं अवदध्यात्। 'देवीः'-'विश्वदेव्यावती.'-इत्युभयत्र § "सुपां सुलुक्"-इति ‖ पूर्वसवर्णदीर्घः ॥

मन्त्रं व्याचष्टे— "देवानां हैता अग्र इति। या देवपत्न्यः— इन्द्राणी, अग्नायी, अश्विनी, राट् इत्याद्याः ¶ पुरा उखा मवटे स्थापितवत्यः। अतः अनेन मन्त्रेण ताभिरवस्थापित-

---

* का० श्रौ० सू० १६ ४ ६ ।

† का० श्रौ० सू० १६. ४ १०, ११ ।

‡, § "देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद् दधतु"-इति वा० सं० ११ ६१. १ ।

‖ पा० सू० ७ १. ३९ ।

¶ ऋ० सं० ४ ७ १८. १ । व्याख्यातार्थेमा निरुक्ते १२. ४ १२ ।

यात् भवतीत्यर्थः। 'देवयज्ञी'-शब्दस्य ओषधयोऽर्थ इति ओषधिपरिशार्कं यदम् तेन मन्त्रेणोपधानं प्रशंसति— "ता ह ता ओषधय एवेति। 'ता ह' ताः खलु देवयज्ञाः, 'ताः' 'ओषधय एव'; न तस्या इति तस्मात् नित्योपधानात्मना देवयज्ञोस्तुतिः। तर्ह्योषधीनां निधानशक्तिः कुत इत्यत आह— "ओषधीभिर्हीदं सर्वं हित-मिति। व्रीहियवादिरूपाभिः ओषधीभिः सर्वस्य जगतो धारकत्वं प्रसिद्धम्।

निर्मीयमाणानां विश्वज्योतिषां सदधानं विधत्ते—"अथ यथन मित्यादिना। दीपनं दक्षिणाग्निमेव। "दक्षिणाग्न्य-ग्निना दीपयति धिषणास्त्वेति"-इति * सूत्रम् ॥ ४ ॥

"धिषणास्त्वेति †। मन्त्रस्तु पूर्ववद् व्याख्येयः। "धिषणा हैता मित्यादि ब्राह्मण मपि पूर्ववत्। 'अभीन्धिरे' अभितो दीपयन्तः।

धिषणाशब्दस्य विवक्षित मर्थे ब्रुवन् तस्याः एतत्कर्मयोग्यता-समर्पणाय प्रसिद्धमभिप्रेति आह— "सा ह सा वागेवेति। या सा खलु धिषणा, 'सा' प्रसिद्धा 'वागेव' नान्या; वाचो व्यवहारा-भावे कस्यापि वस्तुनोऽभिव्यक्तेरभावात्। "वाचा हीदं सर्वं मिद्ध मित्युक्तम् ‡ 'इद्धम्' दीपितं प्रकाशित मित्यर्थः॥

यदुक्तं सूत्रकृता— "वदन्नी इष्टकाभाजो जपतीति §, तदिदं विधत्ते— "अथैतानि त्रीणि यजूंषीयमाण एव जप-तीति। "वदन्तीदा", "म्ना त्वा", "अभयत्वा"-इति त्रीणि

* का० श्रौ० सू० १६ । ४ । १९ ।
† वा० सं० ११. ६१. ३ । ‡ ६८० पृ० ११ पं० ।
§ का० श्रौ० सू० १६ । ४ । १४ ।

'वरूत्रीः' वरूत्रयः * । अर्थवादे बहुवचनान्तत्वेन निर्देशात् एकेन श्रपणम् द्वाभ्यां पचनम् यद्यपि वर्ण्यते, तथापि पाकश्रपणयोरग्निकर्त्तव्यत्वेन स्वरूपानुकूलप्रयत्न मन्तरेण, स्वकर्त्तव्याभावात् तूष्णींपूर्वको जप एव कर्त्तव्य इत्येवाभिप्रायः ॥ ५ ॥

प्रथमं यजुरवधार्य व्याचष्टे— "वरूत्रीष्ट्वा देवीरिति † । वरूत्रिशब्दस्याभिप्रेत मर्थ माह— "तानि हेति । 'तानि' एतानि 'अहोरात्राणि' । प्रतिनिर्दिश्यमानाहोरात्रापेक्षया तानीति । वरूत्रीणा महोरात्रनिर्देशात् नपुंसकता, अथवा सामान्यविवक्षया नपुंसकत्वं द्रष्टव्यम्; तानि वरूत्राख्यानि कृत्स्नं जगत् श्रपयन्तीति । वरूत्रय इति योऽयं वरूत्रिशब्दस्यावयवार्थः, तस्येतरस्याहोरात्रेषु सद्भावं दर्शयन्नुक्तार्थसमर्थनाय— "अहोरात्रैर्हीदं सर्वं वृत मिति । 'अहोरात्रैरेव' 'एनाम्' उखां श्रपयति, यः 'एतत्' एतेन अहोरात्रवाचकवरूत्रिशब्दयुक्तेन यजुषा श्रपयति ॥ ६ ॥

अथ द्वितीयं यजुरनूद्य व्याचष्टे— "ग्नास्त्वा देवीरित्यादिना ‡ । यदुक्तं "छन्दांसि वै ग्ना इति §, तदुपपादयति— "छन्दोभिर्हि स्वर्गं लोकं गच्छन्तीति । गच्छन्त्याभिर्यजमानाः स्वर्ग मितिव्युत्पत्तेः छन्दःस्वपि सम्भवादित्यर्थः । "ग्नाः गच्छन्त्येनाः"—इति ‖ निरुक्तम् ॥ ७ ॥

---

* पा० सू० ७ १ ३४ । वरूत्रिशब्दो ह्रस्वेकारान्तो दीर्घेकारान्तश्च । वा० सं० ११. ६१, १२. ४४, शत० ब्रा० इहैवोभयविधः श्रुतः; तै० सं० तथैव ४. १ ६ १, ५ १. ७ ३ द्रष्टव्यम् ।

† वा० सं० ११. ६१. ४ । ‡ वा० सं० ११. ६१. ५ ।

§ पुरस्तात् (५ अ० ४ ब्रा० ७ क०) द्रष्टव्यम् ।

‖ निरु० ३. ४ ४ । पुनश्चाप्यत्र "ग्ना गमनात्"—इति (१०. ४. १०.) ।

पतिना धृतः, तथापि किं मात्रेत्यत आह—"यावानग्नि-र्यावत्यस्य मात्रेति। यावानिति स्वरूपस्येयत्ता, यावतीत्यवयवस्य। "तावद् तत् भवतीति। नैमित्तिकचित्या सह चितीनां मध्यव-र्तीनां षट्त्वात् सा अन्तर्गता षष्ठी चितिद्वारेणाग्नेर्मात्रया समा भवति। चित्यात्मकत्वाग्नेः स्वरूपैकत्वात्। ऋतुषट्कसंख्यावतोऽवय-विनः संवत्सरस्याप्येकत्वाच्च सा अन्तर्गता षष्ठी संवत्सरद्वारेण अग्नि-र्यावान् तावती भवतीत्यर्थः ॥ ८ ॥

उखायाः समन्त्रकं सुपावहरणं विधाय प्रशंसति—"अथ मित्रस्य चर्षणीधृत इति *। "मैत्रेण यजुषोपन्याचरतीति। लोके 'मित्रः' मित्रभूतः पुमान् 'न' 'कञ्चन' 'हिनस्ति' मित्रत्वादेव; 'मित्रम्' अपि 'न' 'कञ्चन' मित्रत्वादेव। 'तथो' तथा च सति मैत्रेण मन्त्रेण नितरां सुपचरणीयस्य पुनस्तृणमयेनाप्युपचारस्यो-पचारे सति 'एष' यजमानः 'एताम्' उखां मित्रत्वादेव 'न हिनस्ति'। 'नो' नैव 'एतम्' उपचरन्तं यजमानम् 'एषा' उखा, मां भयं दहतीति क्रुद्धा सती न हिनस्ति।

तस्याः प्रक्षेपोत्क्षेपणयोः कालनियममाह—"तां दिवै-वोपवपेद्, दिवोद्वपेदिति। उपवापोऽवटे प्रक्षेपः, उद्वापस्तत ऊर्ध्वं नयनम्। "अहर्ह्याग्नेय मिति ॥ १० ॥

अग्नेः सूर्यस्य तेजस एकत्वाभिभावकत्वाभिप्रायेण उद्वापे मन्त्रं विधास्यन् सावित्र माह—"तां सावित्रेण यजुषोद्वपतीति †।

यजुषोऽयमर्थः ‡— हे उखे! त्वा 'सविता' सर्वस्य प्रेरको

---

* वा० सं० ११ ६२।
† का० श्रौ० सू० १६ ४ १८।
‡ वा० सं० ११ ६३ १।

देव उद्वपतु। कीदृशः? ‘सुपाणिः’ ‘पाणिः’ पानादिसाधनप्रदेशः, शोभनेन तेन युक्तः। ‘स्वङ्गुरिः’ शोभनाङ्गुलिकः। “वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यत इति वक्तव्यम्” —इति * विकल्पेन रत्वम्। बाहुर्भुजदण्डः। ‘उत’ अपि च शक्त्या महत्या युक्त इति शेषः। “सर्वं नु ह्येतत् सवितेति। एतत् ‘सर्वं’ सुपाण्यादिकं ‘सविता’ एव, न देवतान्तरमित्यर्थः। उक्तं उद्वपनार्थे † ॥ ११ ॥

यदुक्तं सूत्रकृता “उखां सुत्तानां करोति अव्यथमानेति’—इति ‡, तदिदं समन्त्रकं पर्यावर्त्तनं विधत्ते— ‘अथैनां पर्यावर्त्तयत्यव्यथमानेति §। पर्यावर्त्तनं मूर्द्धाभिमुखीकरणम्। हे उखे। ‘अव्यथमाना’ व्यथामप्राप्नुवन्ती, ‘पृथिव्याम्’ अवस्थिता त्वम्, इमाः परिव्याप्ताः ‘आशाः’ प्राच्यादयः, ‘दिशः’ आग्नेयादिविदिशश्च ‘आ’ सर्वतः ‘पृण’ पूरय। आपृणेत्यस्यार्थमाह— “आपूरयेति। ‘एतत्’ एव आपृण, यद् वायव्यमसि, तदेतदेव न त्वधिकमित्यर्थः ॥ १२ ॥

तस्या गर्त्तादुद्धरणं विधत्ते— “अथैनामुद्यच्छतीत्युत्थाय बृहती भवेतीति ||। उद्यमनं मूर्द्धधारणम्। हे उखे। पृथिवीतः उत्थिता भव, [illegible] ह्यनुत्थिताया ग्रहणमुपपद्यते। एत

---

* पा० ८ २ १८ सू० २वा०।

† ३०० पृ० १७प० उद्वपनमिति। “उद्वपति भस्मीभूतं पराकरोति”—इति चात्र महीधरः।

‡ का० श्रौ० सू० १६ ४ २०।

§ वा० स ११ ६३ २।

|| का० श्रौ० सू० १६ ४ २१।

मन्त्रभागं * व्याचष्टे— "उत्थाय हीमे लोका बृहन्त इति । उखाया लोकत्रयात्मकत्वेन प्रागुक्तत्वात् 'उत्थाय' ऊर्ध्वं मवस्थित्य, बहिरिमे त्रयो लोका 'बृहन्तः' अधिकपरिमाणा दृश्यन्त इत्यभिप्रायः । "उदु तिष्ठेति द्वितीयभागे ध्रुवशब्दस्य सोऽयम् अर्थ इति व्याचष्टे— "उदु तिष्ठ ध्रुवा त्वं प्रतिष्ठितेतीति । 'एतत्' * उपरिस्थापितायाः ॥ १३ ॥

क्षीरसेचनार्थं पात्रे स्थापनं विधत्ते— "तां परिददातीति । 'निदधाति' स्थापयति, 'पात्रे'-इति शेषः । तथाच कात्यायनः— "परिदद्य पात्रे करोति मित्रैतां त इति"-इति † । हे 'मित्र !' देव ! वायो ! 'एताम्' उखां 'ते' तुभ्यम् 'परिददामि' । परिदानं रक्षणार्थं दानम् । 'अभित्त्यै' अभेदनाय 'एषा' उखा 'मा भित्' भिन्ना मा भूत् 'इति ‡ । मित्रशब्दस्यात्र समीहितमर्थमाह— "अयं वै वायुर्मित्र इति । 'योऽयं पवते' सततं वाति । पवतिर्गतिकर्मा § । "ते हीमे लोका मित्रगुप्ता इति । लोकत्रयात्मकोखापरिदानेनेदानीं अपि त्रयो लोका वायुना गुप्ता रक्षिता अविचलिता वर्तन्ते । 'तस्मात्' 'एषां लोकानां' मध्ये 'न किञ्चन' 'मीयते' हिंस्यते ॥ १४ ॥

अथ तस्यां गुप्तायां पय आसेचनं विधाय स्तौति— "अथैनामाच्छृणत्तीति ‖ । "खेमे त्वा"-इत्यादिना । 'एनाम्' उखाम्

---

* वा० सं० ११ ६४ १ ।

† का० श्रौ० सू० १६ ४. २३ ।

‡ वा० सं० ११. ६४ २ ।

§ निघ० २ १४. १०८ इत्ययम् ।

‖ का० श्रौ० सू० १६ ४. २३ ।

'आच्छृणत्ति' आसिञ्चति । गतमन्यत् । प्रकारान्तरेण प्रशंसति— "यद्वेवाच्छृणत्ति, शिर एतद् यज्ञस्य यदुखेति । प्राधान्याद् उखायाः शिरोऽस्त्वव्यवहारः । पयसो बलकरत्वात् प्राणत्वव्यपदेशः । पयोयोग्यत्वं स्त्रीपुंसप्रसिद्ध्या समर्थ्यते— "पयो योषा वा उखेति । स्त्रीलिङ्गत्वादुखाया योषात्वम् पयसः रेतोवर्द्धकत्वात् रेतस्त्वं प्रसिद्धम् ॥ १५ ॥

विधाय स्तौति— "अजायै पयसाच्छृणत्तीति * । प्रजापतेः शोकादजासम्भूतिराख्यानान्तराच्च द्रष्टव्या ; चीयमानस्याग्नेः प्रजापत्यात्मकत्वं प्रागुक्तम् । प्रजापतिरग्निः, प्रकारान्तरेण स्तौति— "यद्वेवाजाया इति । 'यत्' 'उ' अपि च 'अजायाः' पयो भवतीति शेषः । स्पष्टमन्यत् ॥ १६ ॥

तत्र मन्त्रमाह— "वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वदित्यादिना † । हे उखे ! त्वां 'वसवः' देवा अष्टसङ्ख्याकाः, 'अङ्गिरस्वद्' अङ्गिरस इव 'आच्छृन्दन्तु' आसिञ्चन्तु । कीदृशाः ? 'गायत्रेण छन्दसा' सहिताः ; अष्टसङ्ख्या वसूनां गायत्रच्छन्दस्सम्बन्धे द्वारः ।

एवमुत्तरे मन्त्रा अपि व्याख्येयाः ।

विश्वेषां नराणां हिता 'वैश्वानराः' ते, सर्वे देवाः । "अजापयसासिञ्चति वसवस्त्वेति प्रतिमन्त्रम्"—इति हि सूत्रम् ‡ ॥

अत्रासेचनमन्त्रेषु वस्वादयः प्रतिपाद्याः, निर्माणमन्त्रेषु, धूपनमन्त्रेषु च । अतो यद् देवतैक्यं तत् प्रशंसति— "स वै याभिरेव देवताभिः करोति, ताभिर्धूपयति, ताभिराच्छृण-

---

† वा० सं० ११. ६५. १—४ ।

*, ‡ का० श्रौ० सू० १६ ४. २३ ।

क्रोति *। "यो वाव कर्म करोति, स एव तस्योपचारं वेदेति। यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति', 'स एव' तद्व्यार्थम् 'उपचारं' शङ्कुं प्रति दार्वादिस्थापनलक्षण मुपचार-जातं 'जानाति'; यतो युक्तम्, येनैव छन्नम्, तेनैव धूपना-वेषणोपचारेण मित्यर्थः ॥ १७ ॥ २ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीस्त्रिदशतरुलताधेनुपीयर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्यश्राणीद् विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

---

* "यावद्भाचरेत"—इति का० श्रौ० सू० १६ ४. १६। यावद्भिः प्रकारैः अग्न्यं प्रदीपेत् तावद्धानेनैव मन्त्रेणाचरेत। आचरणं च स्वपणप्रक्षेपः। "द्विवेत्र प्रदहनोद्धरणे (१६. ४ १७.) कर्तव्ये। प्रद-हनं पचनम्, उद्धरणं वहिर्निष्काशनम् ॥

पाथ्योर्थे प्राग्यजम्मा संवपत्र सतृणः शार्करं चार्कतेजाः,
एताभ्यो रुद्ररूपं गिरि भक्तत मुदा पात्रसात्रिद्र्यायैः ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

* छायलाष्टीप्यन्. पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

करोति *। "यो वाव कर्म करोति, स एव तस्योपचारं वेदेति। यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति', 'स एव' तद्वाच्छीर्षम् 'उपचारं' शङ्कुं प्रति दार्वादिस्थापनलक्षण मुपचार-जातं 'जानाति'; अतो युक्तम्, येनैव छन्नम्, तेनैव धूपना-वेक्षणोपचारस्य मित्यर्थः ॥ १७ ॥ २ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
कल्पाब्धीन् पञ्चसीरीं स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां हस्त्यश्वाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्याधोहिश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।

---

* "यावद्वाचरेत्"—इति का० श्रौ० सू० १६. ४ १६। यावद्भिः प्रकारैः अपर्णा प्रतिपेत् तावद्वानेनैव मन्त्रेणाचरेत्। व्याचरणं च अपणप्रक्षेपः। "दिवैव प्रदहनोद्धरणे (१६. ४. १०.) कर्तव्ये। प्रदहनं पचनम्, उद्धरणं बहिर्निष्कासनम् ॥

प्राच्योऽस्थं प्राज्यजन्मा लवणज मनुष: शार्करं पार्कतेजा: ,
रत्नाव्यो रत्नरूपं गिरिं मजत मुदा पात्रसाभिज्ञणार्थ: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमोऽध्याय: समाप्त: ॥ ५ ॥



* षट्चत्वारीयान्त. पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्या: ।

(अथ पञ्चाध्याये प्रथमं ब्राह्मणम्।)

---

भूयांसि हवींषि भवन्ति। अग्निचित्यायां यदु चानग्निचित्याया अतीनि ह कर्माणि सन्ति यान्यन्यत् कर्माति तान्यतीनि तेषा अग्निचित्या राजसूयो व्वाजपेयो ऽश्वमेधस्तदाप्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनि ॥ १ ॥

आग्नावैष्णव एकादशकपालः। तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपाल आदित्यश्च चरुस्ते ऽग्नेः* ॥ २ ॥

स यदाग्नावैष्णव मेव निर्व्वपेत्। नेतरे हविषी ऽअध्वरस्यैव दीक्षणीयं कुर्यात् नाग्नेरथ यदेते ऽएव हविषी निर्व्वपेन्नाग्नावैष्णव मग्नेरेव दीक्षणीयं कुर्यान्नाध्वरस्य ॥ ३ ॥

उभयानि निर्व्वपति। अध्वरस्य चाग्नेश्चोभयं ह्येतत् कर्माध्वरकर्म चाग्निकर्म चाध्वरस्य पूर्व्वं मयाग्नेरुपायि ह्येतत् कर्म यदग्निकर्म† ॥ ४ ॥

---

* 'अग्नेः'—इति ग, घ।

† '०कर्मं'—इति ग, घ।

स य एष आग्नावैष्णवः * । तस्य तदेव ब्राह्मणं यत् पुरश्चरणे व्वैश्वानरो द्वादशकपालो व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषा मग्नीना मुपाप्त्यै द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो व्वैश्वानरः † ॥ ५ ॥

यद्वेवैतं व्वैश्वानरं निर्व्वपति । व्वैश्वानरं वा ऽएत मग्निं जनयिष्यन् भवति त मेतत् पुरस्ताद्दीक्षणीयायाऽ रेतो भूतऽ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग् जायते तद्यदेत मत्र व्वैश्वानरऽ रेतो भूतऽ सिञ्चति तस्मादेषो ऽमुत्र व्वैश्वानरो जायते ॥ ६ ॥

यद्वेवैते हविषी निर्व्वपति । क्षत्रं वै व्वैश्वानरो व्विडेष आदित्यश्चरुः क्षत्रं च तद्विशं च करोति व्वैश्वानरं पूर्व्वं निर्व्वपति क्षत्रं तत् कृत्वा व्विशं करोति ॥ ७ ॥

एका एष भवति । एकदेवत्य एकस्यं तत् क्षत्र

---

* 'आग्नावैष्णवः'—इति ग, घ।

† 'वैश्वानरः'—इति ग, घ।

मेकस्याᳲ श्रियं करोति । चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएष । देवानां यदादित्या विशि तद्भूमानं दधात्यधिदेवतम् * ॥ ८ ॥

अथाध्यात्मᳲ † । शिर एव वैश्वानर आत्मैव आदित्यश्चरुः शिरश्च तदात्मानं च करोति वैश्वानरं पूर्व्वं निर्व्वपति शिरस्तत् कृत्वात्मानं करोति ‡ ॥ ९ ॥

एक एव भवति । एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएषोऽङ्गानां यदात्मा तदङ्गानां भूमानं दधाति ॥ १० ॥

घृत एव भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपाᳲशवेतानि हवीᳲषि भवन्ति रेतो वा ऽअत्र यज्ञ उपाᳲशु वै रेतः सिच्यते § ॥ ११ ॥

---

* '०देवतम्'—इति ग, घ ।

† 'अथाध्यात्मं'—इति ग, घ । 'अथाध्यात्मं'—इति ङ ।

‡ 'करोति'—इति ग, घ । § 'सिच्यते'—इति ख ।

अथौद्ग्रभणानि जुहोति । औद्ग्रभणैर्वै देवा आत्मान मस्माल्लोकात् स्वर्गं लोक मभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमान औद्ग्रभणैरेवात्मान मस्माल्लोकात् स्वर्गं लोक मभ्युद्गृह्णीते ॥ १२ ॥

तानि वै भूयाᳪसि भवन्ति । अग्निचित्यायां यदु चानग्निचित्यायां तल्लोक्ता बन्धुरुभयानि भवन्ति तल्लोक्तोऽध्वरस्य पूर्वाण्यथाग्नेस्तस्यो ऽप-वोक्तः * ॥ १३ ॥

पञ्चाध्वरस्य जुहोति । पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतᳪ सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतᳪ सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १४ ॥

स जुहोति । आकूति मग्निं प्रयुजᳪ स्वा-

* 'ऽप्येतः' —इति क, ख ।

इत्याकूताद्वा ऽएतदग्ने कर्म समभवत्तद्वेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १५ ॥

मनो मेधा मग्निं प्रयुजऽ स्वाहेति। मनसो वा ऽएतदग्ने कर्म समभवत्तद्वेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १६ ॥

चित्तं विज्ञात मग्निं प्रयुजऽ स्वाहेति। चित्ताद्वा ऽएतदग्ने कर्म समभवत्तद्वेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १७ ॥

व्वाचो व्विधृति मग्निं प्रयुजऽ स्वाहेति। व्वाचो वा ऽएतदग्ने कर्म समभवत्ता मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १८ ॥

प्रजापतये मनवे स्वाहेति। प्रजापतिर्व्वै मनुः स हीदऽ सर्व्वं ममनुत प्रजापतिर्व्वा ऽएतदग्ने कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १९ ॥

अग्नये व्वैश्वानराय स्वाहेति। संव्वत्सरो वा ऽअग्निर्व्वैश्वानरः संव्वत्सरो वा ऽएतदग्ने कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ २० ॥

अथ सावित्रीं जुहोति। सविता वा ऽएतदग्ने

कर्माकरोत्त मेवैतद्देवस्मै कर्मणे प्रयुङ्क्ते विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम्* विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति यो देवस्य सवितुः सख्यं वृणीते स द्युम्नं च पुष्टिं च वृणीत ऽएष वा ऽअस्य सख्यं वृणीते य एतत् कर्म करोति ॥ २१ ॥

तान्नु हैके उखाया मेवैतान्यौदग्रभणानि जुह्वति कामेभ्यो वा ऽएतानि हूयन्त ऽआत्मो ऽएष यजमानस्य यदुखात्मन्यजमानस्य सर्वान् कामान् प्रतिष्ठापयाम इति न तथा कुर्यादेतस्य वै यज्ञस्य सᳪंस्थितस्यैतासा माहुतीनां यो रस-स्तदेतदर्चियेह्वोध्यते तद्यत्सᳪंस्थिते यज्ञे जुहुत्यौद्-ग्रभणपूर्वां प्रवृणक्ति तद्देना नेव यज्ञ आरोहति तं यज्ञं विभर्त्ति तस्मात्सᳪंस्थित ऽएव यज्ञे हुते-ष्वौदग्रभणेपूर्वां प्रव्रज्यात् ॥ २२ ॥

मुञ्जकुलायेनाग्रस्तीर्णा भवति। आदीप्यादिति न्वेव यद्देव । मुञ्जकुलायेन योनिरेषाग्नेर्यन्मुञ्जो

---

* 'सख्यम्'—इति ग, घ ।

न वै योनिर्गर्भं हिनस्त्यहिंसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २३ ॥

अगाकुलाय मन्तरं भवति । आदीप्यादित्ति न्वेव यद्वेव अगाकुलायं प्रजापतिर्यत्रे योनिरसृज्यत तद्या ऽउमा उल्ब मासञ्छणा जरायु तस्मात्ते पूत-यो जरायु हि ते न वै जरायु गर्भं हिनस्त्यहिंसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥ २४ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [९. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये उखासम्भरण मथाद्याविष्णुक्रमोतिषानाद्येष्ट-कानां तिर्यङ्मान मुक्तम्, अथ षष्ठे दीक्षणीयाद्युखाभेदनप्राय-श्चित्तान्तः प्रयोग उच्यते। तत्र प्राकृतीं मासां वैष्णवीष्टिं, ऐन्द्रीं वैश्वानरद्वादशकपालेष्टिं सादितो विधास्यन् नुपोद्घात-यति — "भूयांसि हवींषि भवन्त्यग्निचित्याया मित्यादिना। भूयसा हविषा सह्यावयोष्यत्वाभिधानाय अग्न्यातिकर्मत्वं प्रथम प्रतिजानीते — "चत्वारि ह कर्माणि सन्तीति। तेषां स्वरूप-

दर्शनमिलस्य मसहमानोऽग्निकर्मशब्दं तावन्निर्वक्ति— "यान्यन्यत् कर्माणि तान्यतीनीति ॥ १ ॥

इदानीं माग्नावैष्णवादिहवींषि विधत्ते— "आग्नावैष्णव एकादशकपाल इत्यादिना। 'तत्' 'अध्वरस्य' सोमयागस्य 'दीक्षणीय' दीक्षासंस्कारकं हविः। 'वैश्वानरो द्वादशकपाल', 'आदित्यचरु' च 'ते' एते हविषी 'अग्ने' एव प्रातिस्विके* ॥ २ ॥

इत्थं अध्वरचित्याग्न्योर्हविर्व्यवस्था मुक्ता उभयविधान्यपि हवींषि कर्तव्यानीत्याह— "स यदाग्नावैष्णवमेव निर्वपेदित्यादिना। अध्वरस्य चितेश्चेत्युभयोर्दीक्षणीयत्वसिद्धये उभयानि हवींषि अनुष्ठेयानि, अन्यतरहविषोऽकरणे तत्र स्यादित्यर्थः ॥ ३ ॥

"उभयानि निर्वपतीति। "उभयं ह्येतत् कर्मेति। 'एतत्' साग्निचयनसौमिकं 'कर्म', 'उभयम्' उभयात्मकं खलु। किं तदुभयमिति, तत्राह— "अध्वरकर्म चाग्निकर्म चेति। तत्र पौर्वापर्यस्यानियमप्राप्तौ आह— "अध्वरस्य पूर्वं मथाग्नेरिति। अग्ने कर्मणः प्राथम्यं किं न स्यात्? इत्यत आह— "उपायि ह्येतत् कर्म, यदग्निकर्मेति। 'उप' प्रकृतकर्मणः समीपे, तदुपजीव्य, 'एति' आयातीति 'उपायि' ॥ ४ ॥

प्राकृतस्याग्नावैष्णवस्य प्रयोगः किं न व्याख्यायत इत्याशङ्क्य आग्निष्टोमिकं ब्राह्मणमतिदिशति— "स य एव आग्नावैष्णवस्तस्येति। "यत् पुरश्चरणमिति। 'पुरः' पूर्वं 'चरणम्'

---

* प्रातिस्विक—स्वकीय नि० का० ३ १ २२। 'यस्माच्चतुर्थं पर्वण शुनाशीर्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति— इति का० श्रौ० ५ ११ १ सू० टीका द्रष्टव्यम्।

अनुष्ठानं यस्मिन्, तत् 'पुरश्चरणम्', प्रातःकाल मग्निष्टोमकर्मेत्यर्थः। तस्मिन् यद् 'ब्राह्मणम्' उक्तम्, 'तदेव 'तस्य' अग्निचयनस्य; यद्वा 'तस्य' तत्कर्तोराम्नातं ब्राह्मणम्* ।

अथाग्नेर्दीक्षणीयं हविरनूद्य प्रशंसति— "वैश्वानरो द्वादशकपालो वैश्वानरो वै सर्वेऽग्नय इति। यो 'वैश्वानरः' चित्वा ख्याप्यमानः, सः 'सर्वेऽग्नयः' चितिरूपाः षडग्नयः; अधिष्ठानाधिष्ठेययोरभेदात्। अथवा विश्वेषां नराणां हितत्वेन सम्बन्धी 'वैश्वानरः' भूमिलोकाधारभूतोऽग्निः, स एव 'सर्वेऽग्नयः' द्यौर्वैजाठरवैद्युताहवनीयाद्यग्नयः, तेषां सर्वेषां मित्र मासो वैश्वानराग्निदेवत्यकपालगतसङ्ख्यां प्रशंसति— "द्वादशकपालो द्वादशमासाः संवत्सर इति ॥ ५ ॥

प्रकारान्तरेण पुरोडाशदेवतां प्रशंसति— "यद्वेवैतं वैश्वानरमिति। 'एतं' 'वैश्वानरं' सप्तचित्यात्मकं 'जनयिष्यन्' इष्टकाभिरुत्पादयिष्यन् भवति, अतः 'तम्' 'एतत्' इदानीं 'पुरस्तात्' उत्पादनात् प्रागेव, 'दीक्षणीयायाम्' एव वैश्वानरहविःप्रक्षेपेण 'रेतोभूतं' बीजरूपापन्नं 'सिञ्चति'। अत उभयोर्निषिक्तव्यजनयितव्ययोर्वैलक्षण्यपरिहाराय आदावपि पुरोडाशो वैश्वानर एव कर्तव्यः। उक्तार्थो लोकसिद्ध इति दर्शयति— "यादृग्वै योनौ रेत इति। प्रतिपादितं सादृश्यं प्रकृते दर्शयन् पुनर्निगमयति— "तद्यदेत मत्र वैश्वानरमिति। 'तद्यत्' -इत्यत्र तच्छब्दोऽनुवादी यच्छब्देन प्रयुज्यते, 'अत्र' दीक्षाकाले, 'अमुत्र' चयननिष्पत्तिकाले। अथवा, 'अत्र' प्राचीन-

* ३ भा० २१ पृ० (१. ३. १०) द्रष्टव्यम्।

वंशे देशोभूतं सिञ्चति वैश्वानरम्; 'मन्थन' सौमिके चिति-प्रदेशे जनयति ॥ ६ ॥

अथ वैकृते उभे हविषी समुच्चित्य प्रशंसति— 'यद्वैवेति हविषी इति। 'एते हविषी' वैश्वानरद्वादशकपालादित्यचर्वाख्ये। "अयं वैश्वानर इति। 'वैश्वानरः' अग्निः, 'अयं' क्षत्रिय-जातिः। तथाच बृहदारण्यकम्— "यान्येतानि देवत्रा क्षत्रा-णीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति" -इति *। आदित्यानां तु अग्निर्वसुभिः, सोमो रुद्रैः, वरुण आदित्यैः"-इत्यादिश्रुतिषु † तृतीयान्तानामुपसर्जनप्रतीतेः तेषां प्रजारूपत्वम्। यद्यपि "विडेव आदित्यचरुः"-इति चरोः प्राधान्यं प्रतिभाति, तथापि वैश्यजातित्वयोगात् तच्चितान्तः-पातभूता देवतैवात्र विवक्ष्यते। एवं वैश्वानरवाक्येऽपि। यद्वा, देवताद्वारा द्रव्ययोरप्युक्तजातित्वम्; "एते हविषी भवत इति हविषः प्राधान्यात्। पुरोडाशस्यैकपिण्डत्वेन प्राधान्याच्चैवाव-यवानां तण्डुलानां बहुत्वाद्वा पुरोडाशचर्वोः क्षत्रविड्जातित्वं द्रष्टव्यम्। उभयोरप्यनुष्ठेयत्वाद् अनियमं प्रसक्तमाह— "वैश्वा-नरं पूर्वमिति ॥ ७ ॥

पूर्वस्मिन् हविषि द्रव्यस्य देवतायाश्चैकत्वम्, उत्तरस्मिन् तदुभयबहुत्वं च प्रशंसति— "एक एव भवतीत्यादिना। 'एषः' पुरोडाशः 'एको भवति', स च 'एकदेवत्यः'। एक एव देवता

---

* बृ० उप० १ अ० ४ ब्रा० ११ क०।

† "स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति"—इति च बृ० उप० १अ० ४ ब्रा० १२ क०।

यस्य स तथोक्तः । 'तत्' तेन, तथात्वसम्पादनेन 'एकस्य' 'एव' क्षत्रियम्, एक मेव सर्वस्यापि महामण्डलस्य कृतवान् भवति, बहुराजन्यदृष्टत्वात् । फलित मर्थं माह— "एकस्या श्रिय करोतीति । श्रियः राजाश्रयत्वनियमात् राज्ञ एकत्व सम्पादनादेव तस्या श्रिय मप्येकस्थां करोति । इत्थं वैश्वानरस्य पुरोडाशस्य च परस्परयोग्यता मभिधाय आदित्यानां चरोश्च सङ्गतत्व माह— "चरुर्भवतो बहुदेवत्य इति । यत् 'एष' 'तण्डुलानां' 'भूमा वै' बहुत्वं खलु । भूमेति पुंलिङ्ग प्रति निर्देशं मपेक्ष्य एष इति पुंलिङ्गता । "भूमो एष देवानाम्"— इत्यत्र 'भूमा उ' इति निपातानिपातसमुदाय । शिष्टं स्पष्टम् । प्रकारान्तरेण पुन स्तोतु मुक्त मर्थं व्यवस्थापयति— "इत्यधि दैवत मिति । "यद्वेवैते हविषी"—इत्युपक्रम्य, "श्रियि तद् भूमानं दधाति"—इत्यन्तेन ग्रन्थसन्दर्भेण प्रतिपादितम् 'अधि दैवतम्' देवता मधिकृत्य प्रवृत्त मुक्तम् ॥ ८ ॥

"अथाध्यात्म मिति । वक्ष्यति, "शिर एव वैश्वानर , आत्मैव आदित्यचरुरित्यादिना । प्रथम मनुष्ठेयत्वेन प्राधान्यात् एकत्वाच्च साम्यात् 'आदित्यचरु' 'आत्मा' अङ्गप्रत्यङ्गसहितं कृत्स्नं शरीरम् । शिष्टम् अधिदैवतवाक्यवद् व्याख्येयम् ॥ ९, १० ॥

शरीराश्रयद्रव्य माह— "घृत एव भवतीति । 'घृतभाजना ह्यादित्या'—इति । घृतभागा इत्यर्थः । "तेजो वै घृत मिति * श्रुते घृतस्य तेजोद्रव्यत्वात् आदित्याना मपि तथात्वात् ।

---

* "तेजो वा एतत् पशूनां यद् घृतम्"—इति ऐ॰ ब्रा॰ ८ । ६ । "एतद् वा अग्नेस्तेजो यद् घृतम्"—इति च तै॰ सं॰ २ । ५ । २ । ७ ।

“आदित्य घृतेन चरुम्”–इत्यादौ * घृतसम्बन्धाद्वा तेषां तद्भागभाक्त्वम्। ‘स्वेनैव भागेन’, ‘स्वेन रसेन’ इति व्याख्यानव्याख्येयभाव। अत्र कात्यायन, उखानिष्पादनानन्तरप्रयोग मुक्ताह— “दीक्षामावास्याया मामावास्येनेष्ट्वा, आग्नावैष्णववैश्वानरौ, इति चरुरादित्येभ्य”–इति †। एषां त्रयाणां हविषां सुपांशुधर्मकत्व विधत्ते— “उपांशुदेवतानि हवींषि भवन्तीति। “करणवदशब्द सुपांशु”–इति तल्लक्षणम्। “रेतो वा अत्र यज्ञ इति। ‘अत्र’ ‘अस्मिन् दीक्षासमये क्रियमाणो ‘यज्ञ.’ ‘रेतो वै’ रेत. खलु। अस्य रेतस्त्व मुक्त प्राक्॥ ११॥

अथौदग्रभणानि हवींषि विधाय तन्निर्वचनद्वारेण प्रशंसति— “अथौदग्रभणानि जुहोतीति ‡। “औदग्रभणैर्वै देवा आत्मान मिति। ‘आत्मान’ लिङ्गशरीरोपाधिकं जीवात्मानं ‘देवा.’ ‘अस्माद्’ भूलोकात् ‘स्वर्गं लोकम्’ ‘अभि’ लक्ष्य ‘उदगृह्णत’ ऊर्ध्वमुख माकर्षेण कृतवन्त। उद्ग्रहणसाधनत्वात् ‘औदग्रभणानि’ इति नाम सम्पन्नम्। “इयमहौर्भ” §। “तथैवैतदिति। दृष्टान्तवद् व्याख्येयम्॥ १२॥

तेषां भूयस्त्व माह— “तानि वै भूयांसीति। ‘अनग्निचित्यायाम्’ अग्निचयनव्यतिरिक्ताया केवलज्योतिष्टोमादिक्रियाया ‘यद्’ यान्यत्र हवींषि, ततोऽपि ‘भूयांसि’ ‘अग्निचित्याया’ क्रियाया ‘भवन्ति’। चयनस्य हविर्भूयस्त्व स्वय मेव वक्ष्यति।

---

* श० ब्रा० ३ २ ३ १ द्रष्टव्यम्।
† का० श्रौ० सू० १६ ४ २७, २८, २९।
‡ का० श्रौ० सू० १६ ४ ३० क०।
§ मा० ८ १ १२ मू० १ वा०।

हविर्भूयस्त्वार्थवादब्राह्मणं किमिति नोक्तमित्याशङ्कायामाह— "तस्योक्तो बन्धुरिति। 'तस्य' हविर्भूयस्त्वस्य 'बन्धुः' अर्थनिबन्धकोऽर्थवादः 'उक्तः' अध्यायादौ "भूयांसि हवींषि भवन्त्यग्निचित्यायाम्"–इत्यादिना *। आग्निकैः सौमिकाबाधप्रसक्तावाह— "उभयानि भवन्ति तस्योक्त इति। आग्निकानि सौमिकानि च 'उभयानि' भवेयुः, तस्योभयत्वस्य अर्थवाद उक्तो दीक्षणीय हविः प्रस्तावे— "उभयानि निर्वपति अध्वरस्य चाग्नेश्च"–इत्यादिना †। आध्वरिकाणां पूर्वभावित्वम्, आग्निकानां पश्चाद्भावित्वञ्च विधाय तदर्थवादमतिदिशति— "अध्वरस्य पूर्वाणि, अथाग्नेः, तस्यो एवोक्त इति। "उपांशु ह्येतत् कर्म, यदग्निकर्म"–इत्येव मुक्त इत्यर्थः ‡॥ १२॥

आध्वरिकाणां पञ्चसङ्ख्यामनूद्य प्रशंसति— "पञ्चाध्वरस्य जुहोति पाङ्क्तो यज्ञ इति। प्रातरादिसवनानि त्रीणि, प्रायणीयोदयनीयौ द्वौ, इति पञ्चसङ्ख्यायोगाद् 'यज्ञः' 'पाङ्क्तः'। यद्वा, धानाः करम्भः परिवापः पुरोडाशः पयस्या इत्येवं तैत्तिरीयोक्तहविःपञ्चकसङ्ख्यायोगात् पाङ्क्तत्वम् §। हविःपञ्चकत्वनिष्पादने सति 'यज्ञः' सोमयागः 'यावान्' यत्परिमाणः, 'अस्य' 'मात्रा' अनयश 'यावती' यत्परिमाणा, 'तावता' तेन कृत्स्नेनापि 'एनम्' उत्पाद्यमानं चयनलक्षणम् अग्निं 'रेतोभूतं' बीजरूपे-

---

* पुरस्तात् ६ १ १ (३०६ पृ०) द्रष्टव्यम्।

† पुरस्तादिहैव चतुर्थी कण्डी (३०६ पृ०) द्रष्टव्या।

‡ पुरस्तात् (३०६ पृ० १० पं०) द्रष्टव्यम्।

§ तै० सं० ६. ५. ११. ४, ५, ऐ० ब्रा० २. ३. ६, इह च १ २ १२ मा० भा० द्रष्टव्यम्।

ध्यावस्थितम्, ‘एतत्’-इति क्रियाविशेषणम्, क्रियमाणप्रकारेण ‘सिञ्चति’ निषेकं कृतवान् भवति ।

अग्निचयनीयानां मौद्गमणानां सप्तसङ्ख्यारूपं यदश्विभूयस्त्वम् तद् विधाय प्रशंसति— “सप्ताग्नेः सप्तचितिकोऽग्निरित्यादिना । अग्नेः सप्तचितयः इत्थं द्रष्टव्याः— षड् चितयः इष्टकामय्यः, सप्तमी श्रूयते— “विकर्षीं च स्वयमातृण्णायाश्चोपदधाति •—• सा सप्तमी चितिरिति * । शिष्टं पूर्ववत् । मिलितानां सङ्ख्या मनूद्य प्रशंसति— “तान्युभयानीति । द्वादशमाससंलक्षण एक इति व्याहृतधर्मकाः षट्; अनुगतकालसम्बन्ध एक इति वा सप्तत्वम् ॥ १४ ॥

अग्नौद्गमणकथिता मन्त्राननूद्य व्याचष्टे— “स जुहोति आकूतिमग्निं प्रयुजं स्वाहेत्यादिना † । ‘आकूतिः’ आत्मधर्मो मनसः प्रेरणहेतुः । यद्वा, ‘आकूति’ सङ्कल्पः, तदवस्थापन्नम् । ‘प्रयुजं’ प्रकर्षेण युनक्ति नाडर्यो वृत्ति मिति प्रयुक्, तादृश मग्निचयनात्मकविराड्रूपम् । ‘स्वाहा’ [illegible] अभिन्नस्य सहुत मस्तु ‡ । “आकूताद्वा एतदग्ने कर्म समभवत्, तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते”-इति । एतत्पूर्वं सम्भूतप्रकारेण ‘कर्म’ चयनाख्यम् ‘अग्रे’ पुरा ‘आकूतात्’ प्रकारात् ‘समभवत्’ सम्पन्न मासीत्, ‘तदेव’ ‘एतत्’ इदानीं क्रियमाणप्रकारविशेषम् ‘एतस्मै’ चयनाख्याय ‘कर्मणे’ ‘प्रयुङ्क्ते’ प्रयुक्तवान् भवति । एव मुत्तराण्यपि व्याख्येयानि ॥ १५ ॥

---

* ‘विकर्षीञ्च स्वयमातृण्णाश्चोपदधाति •—• सा सप्तमी चितिः’— इतीहैवोपरिष्टात् ८. १. ४. ६ । † का० श्रौ० सू० १६. ४. ३०ख ।

‡ ‘आकूतिमग्निं प्रयुजं स्वाहा’—इति वा० सं० ११. ६६. १ ।

"मनो मेधा मिति *।" उपर्युपरि व्यापारशीला मनसो वृत्तिर्मेधा, तद्रूपं यत् 'मनः' अस्ति। विमर्शनधर्मं तदात्मकता मापन्नम् अग्निम्। गत मन्यत्। "मनसो वा एतदग्रे"–इत्यर्थवादोऽपि व्याख्यातप्रायः ॥ १६ ॥

"चित्तं विज्ञात मग्नि मिति †। अनुसन्धानरूपं 'चित्तम्', "अनुसन्धानतश्चित्तं विमर्शोऽस्य उच्यते"–इति स्मरणात्। गत मन्यत् ॥ १७ ॥

इत्थं मानसव्यापाररूपस्य मापकस्य अग्नेः प्रतिपादकं होमसाधनं मन्त्र मनूद्य व्याचष्टे— "वाचो विधृति मग्नि मिति ‡। 'वाचो विधृतिः' वचसो विधर्त्री, वाचा नियम्यम्, वाग्रूप मापन्न मित्यर्थः। "वाचो वा इत्यादि, गतम् ॥ १८ ॥

"प्रजापतये मनवे स्वाहेतीति §, पञ्चमो मन्त्रः। तत्र प्रजापतेर्मनोश्च वैयधिकरण्यशङ्कां व्युदस्यति— "प्रजापतिर्वै मनुरिति। कथं तस्य मनुत्व मिति तत्राह— "स हीदं सर्वं मनुत इति। 'इदं' 'सर्वं' जगत् 'मनुते' अव मित्यवगच्छति; तस्य विराड्रूपत्वात्। "प्रजापतिर्वा एतदग्रे कर्माकरोत्, त मेवैतत्"–इत्यादि स्पष्टम्। 'कर्म' चयनाख्यम् ॥ १९ ॥

"अग्नये वैश्वानराय स्वाहेतीति ‖। अस्मिन् षष्ठमन्त्रे वैश्वानरशब्दं संवत्सरपरतया व्याचष्टे— "संवत्सरो वा अग्नि-

---

* "मनो मेधा मग्निं प्रयुजं स्वाहा"–इति वा० सं० ११. ६६. २।
† "चित्तं विज्ञात मग्निं प्रयुजं स्वाहा"–इति वा० सं० ११. ६६. ३।
‡ "वाचो विधृति मग्निं प्रयुजं स्वाहा"–इति वा० सं० ११. ६६. ४।
§ "प्रजापतये मनवे स्वाहा"–इति वा० सं० ११. ६६. ५।
‖ "अग्नये वैश्वानराय स्वाहा"–इति वा० सं० ११. ६६. ६।

वैश्वानर इति। समिद्धप्रदेशे स्थाप्यमानोऽग्निः वैश्वानरः, स च संवत्सरं कृत्वा संवत्सरः *। गतं मन्त्रम् ॥ २० ॥

अथ सप्तमं मन्त्रमनूद्य व्याचष्टे— "अथ सावित्रीं जुहोति, सविता वा एतदित्यादिना। सविता देवता यस्या ऋचः सा 'सावित्री'; "देवस्य नेतुः"-इतिलिङ्गात्। तन्मन्त्रसाध्या आहुतिरपि सावित्री। "सविता वा एतदित्यादि, व्याख्यातम् ॥

साकल्येन मन्त्रं पठति— "विश्वो देवस्य नेतुरिति †। व्याख्यातोऽयं तृतीयकाण्डे ‡। सवितुः सख्यं सख्यतो हिरण्यादिवसुधनशरीरपुष्टिञ्च सम्भेत्यय सर्वैः उत्तरार्धस्य तात्पर्यमित्याह— "यो देवस्य सवितुः सख्यं वृणीते, स द्युम्नं च पुष्टिं च वृणीते"-इति। यद्यपि तत्र द्युम्नवत् पुष्टिशब्दो द्वितीयान्ततया न निर्दिष्टः, तथापि 'पुष्यसे'-इत्यत्र पोषलक्षणं प्रकृत्यर्थं विवक्षित्वा एवं व्याख्यातमिति मन्तव्यम् ॥

अस्तु सख्यं कृतवत् एतत्फलदयं तुच्छस्यामर्त्यस्य भगवता सवित्रा सह सख्यं कथमुपपद्यत इत्यत आह— "एष वा अस्य सख्यं वृणीते, य एतत् कर्म करोतीति। 'यः' पुरुषः 'एतत्' सवितृदेवताकं 'कर्म' 'करोति', 'एषः' खलु 'सख्यं वृणीते' तदीयकर्मसम्पादनं तत्सख्यलाभहेतुरित्यर्थः। अथ

---

* "सह पिता वैश्वानरेणेति। संवत्सरो वै पिता वैश्वानरः प्रजापतिः"—इत्यादि श० ब्रा० १ का० ४ प्र० २ ब्रा० १६ कं० द्रष्टव्यम्।

† वा० सं० ११. ६७ (४. ८. १.)।

‡ १प्र० ४ ब्रा० १८, १९ कं० (३भा० ४८, ५५ पृ०) द्रष्टव्यम्।

कात्यायनः— "प्राकृतान्यौद्ग्रभणानि हुत्वा समाप्तिकान्याहुति मिति प्रतिमन्त्रम्"—इति * ॥ २१ ॥

अथैतेषां औद्ग्रभणानां होमविषये केषाञ्चित् पक्ष मनूद्य, तेषा मुपपादनं निराचष्टे—"तान्यु हैके उखाया मेवेत्यादिना †। 'तानि' एतानि औद्ग्रभणानीति सम्बन्धः। 'एके' अध्वर्यवः' 'उखायां' तस्यां 'जुह्वति', तेषा मभिप्राय माह— "कामेभ्यो वा एतानीति। काम्यन्त इति कामाः स्वर्गादयः। स्वर्ग प्रत्युद्ग्रहणसाधनत्वात् स्वर्गाख्यः कामस्तावदुक्त एव, एव मन्येऽपि। ततोऽर्वाचीनाः कामा एतेषां विषयः। 'उखा'—इति 'यत्' अस्ति, 'एषः' 'यजमानस्य' 'आत्मा उ' शरीर मेव; शरीरस्योखात्वेन तज्जन्यस्याग्नेर्यजमानकाम्यत्वेन च संस्कारात्। यद्वा, यजमानशरीरं यथा यज्ञनिवर्त्तनसाधनम्, एव मुखापीति। तर्हि न्यायेन यजमानशरीरत्व मुखायाः। 'आत्मन्' आत्मनि 'यजमानस्य सर्वान् कामान्'—इति स्पष्टम् ॥

अथ तं पक्षं निषिध्य स्व पक्षं सोपपत्तिक माह— "न तथा कुर्यादेतस्य वै यज्ञस्येत्यादिना। 'एतस्य वै यज्ञस्य' प्रकृतस्य दीक्षणीयाख्यस्य 'संस्थितस्य' सम्पूर्णस्य 'एतासां' दीक्षाहुतीनां 'यो रसः', 'तदेतत्' अग्निज्वालारूपः आहवनीयात्मना 'दीप्यते'। तस्माद् उखायाम् औद्ग्रभणहोमपक्षं निराकृत्य हुतेष्वौद्ग्रभणेषु तेषां यो रसः स्थितः, तेन प्रज्वलिताग्नौ उखाप्रक्षेपणं कर्त्तव्य मिति सिद्धान्तयतोऽय मभिप्रायः:— सर्वकामावाप्तिस्तु दीक्षणीयाख्ये यज्ञे सम्पूर्णे, हुतेषु औद्ग्रभणेषु तेषां यो रसः

* का० श्रौ० सू० १६. ४. ३० ।

† का० श्रौ० सू० १६. ४. ३१ क ।

